कृतः. यद्यार्य! भवांनपराधिनि दण्डमवश्यं प्रयोक्तुमिच्छति, तर्हि मयि प्रयुङ्क्ताम्' इति.

उक्त्वा चैवं लगुडप्रहारं ग्रहीतुं वीरः स बालक उपाध्यायाभिमुखं करं प्रसारयामास.

उपाध्यायस्तु प्रीतस्तस्य करं गृह्णन्नुवाच—'साधु बालक! साधु समाचरितवानसि. प्रत्येमि ते सत्यवादिताम्, अबुद्धिपूर्वं चापराधम्. न चाहं त्वां दण्डयितुमुत्सहे; त्वं ह्यस्थाने दण्डप्रयोगमसहमानः स्वापराधं स्वयं कीर्त्तयन् दण्डं याचमानो धीरोदारचरितः प्रियोऽसि मे जातः.' इति.

विसृष्टश्चोपाध्यायेन स स्वमासनमभजत.

दशवर्षदेशीयोऽसौ बालोऽनेन सदाचारेण न केवलं स्वयं बहुमानमलभत, अपि त्वन्येषां बालानां सदाचारमार्गोपदेशी चाभवत्.



## ३५. दया (क)

कापि हेमन्तसायाह्ने नारी नवतिहायना ।

क्षामदुर्बलसर्वाङ्गी वीथ्यां प्रचलिता शनैः ॥ १ ॥
शीतेन वर्धमानेऽपि जरामूलेऽङ्गवेपथौ ।
यष्टिमालम्ब्य सा यत्नादग्रे द्वित्रपदान्यगात् ॥ २ ॥
अन्ते सा शीतवातेन बलादभिहता सती ।
प्रवेपमानावयवा कुब्जीभूय पथि स्थिता ॥३ ॥
अथ तेन पथा चेलुर्विसृष्टाः पाठमन्दिरात् ।
उच्चकोलाहला बाला गणशः स्फारकौतुकाः ॥ ४ ॥
ते क्रीडाकलितोत्साहास्त्वरमाणा गृहान् प्रति ।
दृष्ट्वापि दीनां तां वृद्धां तूष्णीमेवात्यलङ्घयन् ॥ ५ ॥
तस्याः कर्तुमशक्ताया एकमप्यग्रतः पदम् ।
न ते साहायकं चक्रुर्दीनायाः करदानतः ॥ ६ ॥
अन्ततस्तेषु सोत्साहः सौम्यः कश्चन बालकः ।
पार्श्वमागत्य वृद्धाया इत्थमुच्चैरभाषत ॥ ७ ॥

---

## ३८. दया.(ख)

'एहि मातः! किमर्थं त्वं मार्गमध्ये विषीदसि ।
करोम्यहं ते साहाय्यं यदीतो गन्तुमिच्छसि' ॥ ८ ॥

स ततस्तदनुज्ञातः स्खलन्तीं तां पदेपदे ।
गृहं निनाय शनकैः करालम्बनदानतः ॥ ९ ॥
अनेन कर्मणा तृप्तमानसोऽथ स बालकः ।
स्वं सङ्घं पुनरासाद्य बालानित्थमवोचत ॥ १० ॥
'अयि भो बालकाः! कस्याप्यसौ माता तपस्विनी ।
सर्वेषामविशेषेण दयनीयैव केवलम् ॥ ११ ॥
अस्याः साह्यं न चेत् कुर्युः केऽपि दूरस्थिते सुते ।
अवश्यं केऽपि तत् कुर्युः स्वकरालम्बदायिनः' ॥ १२ ॥
आशिषायोजयद् बालं सा च शय्यां गता निशि ।
'ईशो दयावते तस्मै बालकाय प्रसीदतु' ॥ १३ ॥

---

## २७. ऊर्णनाभो जालं च.

कश्चिद् भूपतिरीश्वरसृष्टानां पदार्थानां प्रयोजनविज्ञानेऽतीव कौतुकवानवर्तत. स चिरं परीक्षमाणोऽपि कस्मै फलाय मक्षिका ऊर्णनाभाश्च सृष्टा इति ज्ञातुं न शशाक.

ततस्ते मानुषानुपयोगिन एवेति निश्चित्य स तेषां वधविनोदे रसिकोऽभवत्.

अथैकदा महति युद्धे शत्रुभिः पराजितोऽसौ कान्दिशीकः क्वचिदरण्ये परिभ्रम्य श्रान्तः कस्यापि वृक्षस्य मूलच्छायायां सुप्तोऽभवत्. तमेनमुपलभ्य कोऽपि शत्रुभटः खड्गपाणिर्यावन्निभृतपदमुपससर्प, तावन्मक्षिकयौष्ठदंशिन्या राजा प्रबोधितो जातः. प्रबुद्धश्चात्याहितमुपस्थितं पश्यन् सहसा तन्निवारणेनात्मानं ररक्ष.

तां च निशां तत्रैव वने कस्यांचन गुहायां स राजा निलीय स्थितः. कश्चिदूर्णनाभस्तस्या गुहाया द्वारं तन्तुजालपरीतं तया निशया व्यातनोत्. अपरेद्युः प्रातर्गुहास्थो राजा गुहासमीपे चरतोर्द्वयोः स्वान्वेषिणोः शत्रुभटयोः सल्लाँपं शुश्राव. तयोरेकोऽवदत्—'असंशयमसावस्यां गुहायां निलीनास्तिष्ठति' इति. अन्योऽब्रवीत्—'नैतत् संभाव्यते, यत इदमूर्णनाभतन्तुजालं गुहाद्वारे निराकुलं दृश्यते. यद्यसौ गुहां प्रविष्टोऽभविष्यत्, तर्हि अवश्यमिदं लूतातन्तुजालं

गुहाद्वारे त्रुटिताकुलमभाविष्यद्' इति.

अथ तां गुहां शून्यां निश्चित्य गतयोस्तयोः स राजा बद्धाञ्जलिरीश्वरं तुष्टाव—'भगवन्! भवता पूर्वेद्युरहं माक्षिकामुखेन रक्षितोऽस्मि; अद्य पुनरूर्णनाभमुखेन. विचित्रैः प्रकारैर्मानुषाणां महान्तमुपकारमुपनयान्ति ते सृष्टयः.' इति.

## ३८. सूर्यवायू.

पुरा कदाचित् सूर्यवाय्वोर्विवादो बभूव—'कतर आवयोर्बलीयान्' इति. अन्ते च 'यः पान्थहस्तगतमिदं घटिकायन्त्रं पान्थेन त्याजयति, स आवयोर्बलीयान्' इति निर्णयसंविदं तावकल्पयताम्.

ततो वायुरात्मनः सर्वां शक्तिमाश्रित्यातिजवनोऽतिशीतः प्रचण्डो भूत्वा वातुमारेभे. पान्थस्तथाभूतेन वायुनाभिहन्यमानोऽपि प्रावारावृतशरीर आत्मनो घटिकायन्त्रं दृढेन मुष्टिना गृह्णन् कथमपि जुगोप.

एवं विफलयत्ने वायौ सूर्यः प्रकाशितुमारेभे. प्रसृतमात्रैरेव तस्य किरणैर्वायवीये जलबाष्पे शीतिम्नि चापनीते पान्थस्तत्कालसह्येनोष्मणा क्षणमिव सुखमनुबभूव. अथाविच्छिन्नं कांश्चित् क्षणान् दीप्यमाने सूर्ये असह्येनोष्मणाभिभूतः प्रक्षीणसत्त्वः पान्थो घटिकायन्त्रं दूरतः क्षिप्त्वा भूतले निषसाद.

अनेन प्रकारेण सूर्यो वायुं जिगाय. एतेन बलात्कारादनुनयः प्रशस्त इत्येष न्यायः स्पष्टो भवति.

———o———

## ३९. हिमालयः.

पञ्चाशदुत्तरसप्तशतानि

अस्ति भारतखण्डस्योत्तरस्यां सीमायां ७५० कोशानायतो हिमालयो नाम सर्वोन्नतो गिरिः. स हिमस्य स्थानभूततया हिमालय इत्युच्यते. स विस्तीर्णाया हिन्दुस्थानस्य समभूमेः प्रभृति बहुश्रेणीरूपमात्मानं कृत्वानुक्रमेणोन्नम्रो वर्तते. तस्याधस्सानौ अनूपप्रदेशाः सन्ति, यान् वेणुभिर्दीर्घैस्तृणविशेषैश्च

निबिडसंछन्नानाश्रित्य वन्यमृगाः सुखं वसन्ति. तत्र ३०००पदोन्नताः प्रथमश्रेणीप्रदेशाः महार्घदारुदाथिभिर्वनैर्व्याप्ता वर्तन्ते. ततः ७०००पदोत्सेधा भूमिरस्ति. तस्या बहुप्रस्रवणोपेताया बहवो भागा जनैरध्युषिता धान्यानि प्रसुवते.

महती मध्यमा श्रेणी तु १८०००पदान्युन्नतास्ति. तस्याः कटकेषु गभीरा नानारूपा गुहा विद्यन्ते. अपिच, अत्युच्चाः संख्यातीता भृगवो भीषणास्तत्रोपलभ्यन्ते. तानप्यतिलङ्घ्योर्ध्वं प्रसृतास्तुहिनावृता गिरिकूटाः स्वाग्रैर्निर्भिन्दन्त इवेन्द्रमणिमेचकमाकाशं लक्ष्यन्ते. तेषु च गिरिशृङ्गेषूच्चतमं शृङ्ग आसमुद्रोपरितलात् २९०००पदोन्नतामिति निश्चितम्.

तस्या गिरिश्रेण्या दक्षिणे पार्श्वे १५०००पदोन्नता शाश्वती हिमराजिरस्ति. प्रदेशोच्चता तावदुष्णमात्रां न्यूनयति. अत उच्चतरेषु भागेष्वोषधयो जायमाना अल्पाकृतयो भवन्ति; परमोच्चेषु तु नैव जायन्ते. तत्र तिबेतदेशप्रापिका बह्व्यः पद्धतयः सन्ति. ताभिर्भाण्डानि मेषेष्वारोप्य पान्था नयन्ति. तत्र

शुष्कवायुस्तथा स्वल्पः, यथा श्वसनमपि दुष्करम्.

अस्मिन् पर्वते लोकहितानि प्रशस्तानि वस्तूनि बहुलमुत्पद्यन्ते. अतोऽयं गुणत उन्नत्या च सर्वान् पर्वतानतिशेते. ततोऽस्य पर्वतराज इति प्रसिद्धिः.

---

## ४०. उपदेशाः.

यदि जीविते नः पक्षपातोऽस्ति, तर्हि वृथा कालं नेतुं नार्हामः. जनो हि कालस्यापव्ययात् कुत्सितजीवितो भवति. रजतं सुवर्णं मौक्तिकं रत्नमित्येवञ्जातीयकं वस्तु नष्टमस्माभिर्भूयोऽर्जयितुं शक्यं; कालस्त्वतीतो नैव प्रत्यानेतुं शक्यः. अपिच, क्षणादिरूपाः सर्वे काला अस्माकं परमस्नेहास्पदस्यायुषोंऽशा भवन्ति. अत एव सकलान् पदार्थानपेक्ष्य कालो महार्घ इति पण्डिता वदन्ति.

किञ्च, कस्मैचित् कार्याय पर्याप्ततयास्माभिर्निर्णीतः कालः कार्यगौरवाद्विघ्नोपनिपाताद्वा प्रायेणापर्याप्त उपलभ्यते.

सोऽयमत्यन्तापेक्षितः सर्वोत्तमः कालाख्यः पदार्थो धनमिव प्रशस्तेषु कार्येष्वप्रमादेन विनियोक्तव्यः. यस्त्वेनमस्थाने द्यूतादौ विनियुङ्क्ते, स्थाने ऽप्यतिमात्रं विनियुङ्क्ते, सोऽपव्ययकारी जनैर्निन्द्यते.

असति विघ्ने कार्यं तदात्वे कुर्वीत, न तु श्वोर्थे विसृजेत्. प्रायशो हि कार्यकालं प्रोषितागतमिव प्रियं भ्रातरं विघ्नाः संपरिष्वजन्ते.

शुभा मे काला उपतिष्ठन्तामिति प्रत्याशया यत्नमकुर्वाणस्य पुंसः कोऽर्थः सिद्धो भवति ? यदि तन्द्रीं विहाय सम्यगुद्यमं कुर्वीमहि, तर्हि, तानिमान् कालान् शुभानापादयितुं वयमसंशयं प्रभवेम.

अहापयन्तः कालं चेत् प्रवर्तेमहि कर्मसु ।
कल्याणानां समग्राणां संपद्येमहि भाजनम् ॥

संपूर्णेयं द्वितीया पाठावली.

शुभं भूयात्.

# NOTES.

———o———

## Lesson 1. Mother and father.

तावत्--ind. at first (before doing anything else). मासान् - अत्यन्तसंयोगे (uninterrupted continuity) द्वितीया. कुक्षिः-womb.. क्लेशः-- pain. सहते --endures. पथ्यः -- wholesome. गर्भः -- fœtus. पुष्णाति -- nourishes. पुष् 9. P. मृत्वा-- having died. ind. p. p. अस्वादु -- unpleasant to the taste. वत्सलः--childloving. चिन्त्यमाना:--past. pres. p. of चिन्त्, 10. U. to take care of. ऋणम्--debt. दैववत् --like god. ind.

## Lesson 2. Duty of men.

साहाय्यम्--help. सहायस्य भावः. प्रजा-- subject. अस्तिमान्-- अस्ति ind. (wealth) अस्यास्तीति तथा. पण्यम्--article for sale. विक्रीणीत -- pot. of क्री 9. U. with वि. to sell. यौवनम्. youth. वार्धक्यम्--the course of worldly life

## Lesson 3. Education.

क्षुत्--hunger. द्रुह्यन्ति-द्रुह् to hurt 4. P. आवश्यका-necessary. दमयतु-to control. वशायतु -to fascinate.

## Lesson 4. Air.

परितः-around. this word always governs द्वितीया. व्यजनम्--fan. वीजनम्--fanning. वाति -- blows. उन्मूलयति -- plucks up by the roots. संवृतं -- closed. कालिघटः --

Calcutta. वातायनम् -- window. कारा - prison. पर्याप्तः - sufficient. मृतकल्पः - almost like dead. कालगर्तः - Black hole.

## Lesson 5. The cause of poverty.

धनिकः - wealthy. आयः - income. यादृच्छिकः -- accidental. विवाहः - marriage. अधीनम् - dependent. तस्करः - thief. सैनिकः - soldier. व्याकुलयामासुः - agitated. विस्रब्धम् -- confidently. adverb.

## Lesson 6. Chemist.

सुवर्णम् -- gold. अभिनयन् -- pretending. सम्भावयिष्यति -- 2. Fut. of सम् + भू + णिच् (causitive term.) to reward पेटिका -- box. उदारम् -- generous. द्रविणम् -- wealth.

## Lesson 7. House.

समीचीनसन्निवेशानि -- well-situated. समीचीनः सन्निवेशः येषां तानि. द्वित्रपदानि - two or three feet. संस्थानानि -- structures. मध्याङ्गणानि -- central yards. सङ्कुचितवक्राः -- narrow and crooked. कुतृण -- rubbish. नानाविधानि -- नाना विधाः येषां तानि. अवरतः -- at least. सुधा -- lime. महार्घः -- valuable. मारीप्रसङ्गः -- मार्याः (pestilence) प्रसङ्गः. अनुदिनम् -- daily. वारः -- week. सुखावहाः -- pleasant. छायादानक्षमाः -- छायायाः दाने क्षमाः. गुल्मः --bush.

## Lesson 8. Selfishness.

श्वा --- dog. मार्जारः --- cat. महानसः --- kitchen. सूद---cook व्यकिरत् --- scattered. imperf. जन्त्वन्तरविलक्षणाः --- अन्यो जन्तुः जन्त्वन्तरं तस्माद् विलक्षणा --- (extraordinary.) देयम् --- दातुं योग्यम्. विगायन्ति --- वि + गै - to deride. कृती - blessed. दुःखैकरसः -

दुःखमेव एको रसः यस्य सः. उभये – both.

## Lesson 9. food.

औष्ण्यम् -- heat. प्रतिनियता – fixed. मात्रा -- measure. निर्व्यापाराणि -- inactive. ऊष्मा -- heat. इन्धनम् -- fuel. शीतिमा -- coolness. परिणमति -- becomes. मांसपरिणामी -- flesh-forming. सारः--substance. गोधूमः--wheat. मुद्गः--pulse. आढकः--doll. शाल्यन्नभोजिनः --those who live upon rice. स्निग्धकोमळन् -- flaby and soft. पिष्टकः -- cake. आमयः disease.

## Lesson 10. Fate.

लिपिः -- character. ईश्महे -- ईश् 2. A. to be able. उद्यमः -- effort. द्वारम् -- way. मलप्रचुरः -- dirty. मातापितरौ -- माता च पिता च तौ. अप्रमाणन् -- not regarded as an authority. पुरुषकारः -- human effort.

## Lesson 11. Pearls.

शुक्तिविशेषः -- oyster. पुटाः -- shell. परुषम् -- rough. श्लक्ष्णः -- smooth. कैवर्ताः -- fishermen. तलस्थाः -- those which. lie in the bottom. धीवराः -- fishermen. उपद्वासप्ततानि -- द्व्यधिका सप्ततिः द्वासप्ततिः तस्याः समीपे ये सन्ति तानि. नावारूढाः -- नावं (boat) आरूढाः. रज्जुबद्धशिलान्यस्तपादः -- रज्ज्वा (rope) बद्धा, सा चासौ शिला च रज्जुबद्धशिला तस्यां न्यस्तौ पादौ यस्य सः. यावच्छक्ति -- as for as possible. मञ्जूषा -- box.

## Lesson 12. Quarrel.

कलहायसे – thou quarrelest. अरोचत – imperf of रुच्, 1. A. to like. आह्वये – I challenge. विग्रहः – fight. क्रीडनम् – toy. तूष्णीम् – silently. in. स्वप्रतिभानुसारी – स्वस्य प्रतिभा (audacity) स्वप्रतिभा तां अनुसरतीति तथा. अध्यवसायः – attempt.

कुप्येयम् – pot. of कुप्, 4. P. to be angry with. कार्षीः – aor. of कृ 7. U. to do. When proceeded by the particle मा the augment अ of the aorist is dropped.

Lesson 13. Who works for me.

स्वकुटीद्वारम् -- स्वस्य कुटी स्वकुटी, तस्याः द्वारम्. ध्यायं ध्यायम् -- often calling to mind. ind. अतथ्यग्राहिणी -- one who takes a wrong view of things. केदारम् -- field. उवाप -- sowed. perf. of वप् 1. P. लुलाव -- reaped. perf. of लू 9. U. वितुषविशदम् -- विगतः तुषो (husk) यस्मात् तत् वितुषं तच्च विशदं च वितुषविशदं. असिः --knife. उलूखलम् -- mortar. मुसलादिकम् -मुसलः (pestle) आदिः यस्य तत्. निर्ममौ -- perf. of मा 2. P. with निर्. निर् +मा to create. कार्पासतन्तुः – cotton-thread. तत्तूलम् --तस्य तूलम् (cotton) तत्तूलम् निरस्थिकम् -- निर्गतं अस्थि (kernal or stone) यस्मात् तत् निरस्थिकम्. सूत्रणचणाः -- those who are skilled in spinning. तन्तुवायाः -- weavers. अवयन् -- wove. imperf. of वे 1. U. कुटीरम् -- hut. असङ्ख्याः -- न विद्यते सङ्ख्या येषां ते तथा.

Lesson 14. Slaughter of the wolf.

उपत्यका -- a land at the foot of mountain. भटवृत्तिः -- भटस्य (soldier) वृत्तिः (mode of leading life) कनिष्ठे -- youngest. स्वसारौ -- sisters. द्वादशम् - twelfth. भयाक्रन्दम् -- भयेन आक्रन्दः (crying out). आभ्यन्तरम् -space between. कुठारः --axe. परशुः --axe. प्रान्स्राज्यचक्रवर्ती -- प्रान्स् इति राज्यं तस्य चक्रवर्ती. कर्णाकर्णिकया --ear to ear. प्रवीणः --clever.

Lesson 15. The cat and the Parrot.

पतेत् --will fall. नृत्येत् --will distance (play) नृत् 4.

P. वासगृहम् -- inner apartment of a house. भित्ति: -- wall. उद्विग्नम् -- sorrowful. उड्डीय -- having flown up. ind. p. p. of डी 4. A.

Lesson 16. Echo.

आसन्नम् -- near. साश्चर्यकातर: -- surprised. (one feeling astonishment and fear.) तारम् -- loudly. जुघोष -- घुष् to cry. con. perf. of घुष् 4 P. to cry. अधिक्षेपवचनानि -- vile words. गर्हिता -- vile. प्रायोक्ष्यथा: -- cond. of युज् 7. U. with प्र. प्र + युज् to use. श्रु--to hear. 1. 7. अश्रोष्य: -- cond. of श्रु to hear 5. P.

Lesson 17. Camel.

मरव: -- deserts. यावद्दृष्टिपातम् -- as far as the eye can reach. सिकता: -- sand. शर्करा: -- gravel. प्रान्तरम् -- long lonesome path. पाथेयजातम् -- पथे हितानि पाथेयानि तेषां जातम्. सागरपान्था: -- sea-travellers. मरुमहानौ: -- ship of the desert. निविशमान: --pres. act p. of विश् (6. P.) with नि. नि + विश्, A. to sit. प्रह्व: -- kneeling. आरबीया: -- Arabians. ऊर्णा -- wool.

Lesson 18. Idleness.

आशंसा -- desire. दोलान्दोलनम् -- दोलायां (swing) आन्दोलनं (swinging). नवनवग्रन्थपरिशीलनम् -- नवनवानां ग्रन्थानां परिशीलनम्.

Lesson 19. (continued)

मौर्ख्यम् -- foolishness. अद्वेषन् -- imperf. of द्विष्, 2. P. to dislike. अनुशास्त अनु + शास् to instruct. दूरम् -- highly. अनुशास्ति- pres. शास्, P. to instruct with अनु. आत्मव्यतिक्रम: -- आत्मनो व्यतिक्रम: (transgressing). ग्रासार्जनाय -- ग्रासस्य (food) अर्जनाय.

Lesson 20. Usefulness of life.

मित्राणि -- friends. सन्त: -- virtuous. यश: -- glory. कीर्ति: --

renown. वित्तम् -- wealth. चलाचलम् -- unsteady. वर्षाः -- rainy season, always fem. and in the plural. प्रेत्य -- having died. ind. p. p. of इ (2. P.) with प्र.

### Lesson 21. Horse.

उदात्तप्रकृतिः -- of a noble nature. पलालानि -- straw कुलीनः -- of good breed. अश्वारोहः -- mounted soldier. अभिजातः -- of good breed. ओजस्वी -- energetic. सादी -- horse man. तावच्चिरम् -- for so long a time. गृध्रवायसादयः -- गृध्रः (eagle.) वायसश्चादिः येषां ते.

### Lesson 22. The man and the lion.

गोचरः -- grasp. अशकत् -- aor. of शक् (to be able 5. P.) उल्लिलेख -- perf. of लिख् 6. P. with उत् to determine. प्रपातः -- cliff. कञ्चुकः -- dress. उष्णीषम् -- head-dress.

### Lesson 23 Whale.

तरति -- तॄ, 1. P. to traverse. आस्यकोटरम् -- आस्यं कोटरमिव आस्यकोटरम्. तनुकायानि -- तनुः (then) कायः येषां तानि. यादांसि -- aquatic animal. सहस्रशः -- in heaps. ind. महानौः -- ship. परिच्छेत्तुम् -- inf. of छिद् (7. P.) with परि. to set limits to. तिमिवेधनीनामा -- तिमिवेधनी (harpoon) इति नाम यस्या सः मेदांसि -- fat. तिमिविशेषः -- sperm whale. दीपवर्तिनिर्माणम् -- दीपस्य वर्तिः दीपवर्तिः (candle) तस्याः निर्माणम्.

### Lesson 24. (continued)

खेलति -- sports. वालवीजनकेलिः -- वालस्य वीजनं (blowing) वालवीजनम्. तदेव केलिः (sport). वीथिः -- way पारावारः -- sea. तस्य वालः तद्वालः एकः प्रहारः. एकप्रहारः तद्वालस्य एकप्रहारः तद्वालैकप्रहारः तेन अस्ता (tossed) मग्ना च नौः यस्य सः तद्वालैकप्रहारास्तमग्ननौकः. व्यादाय -- having opened. ind. p. p. शिरोरन्ध्रद्वारम् -- शिरसि रन्ध्रं.

(hole) शिरोरन्ध्रं तस्य द्वारं (way) गिरन् - pres. act. p. of गॄ 6. P. to swallow. कण्ठीरवः - lion. साम्राज्यसुखम् - pleasure derived from being an emperor. निर्विशति -- feels. अकुतोभयम् - नास्ति कुतोऽपि भय यस्य तत् not threatened from any quarter.

Lesson 25. Fox.

मृगवागुरा - मृगाणां वागुरा (net) मृगवागुरा. संलग्नपादः - संलग्नाः पादाः यस्य सः. जालम् - net. वहनीयम् - वोढु (to bear) योग्यम्. त्वदर्थे -- तव अर्थे (ind.) त्वदर्थे. धूर्तः - crafty. पश्यतस्तस्य -- gen. case. showing disregard. (पश्यन्तं तं अनादृत्य.)

Lesson 26. Catechism.

कतमः -- which of many. गृहमूलम् - foundation of a house. क्लेदः -- damp. भित्त्यधोभागे -- भित्तेः (wall) अधोभागः. घनेष्टका -- घना इष्टका brick. चूर्णलेपः -- mortar. तदाकरः तासां -- आकरः quarry. इष्टकायन्त्रपरिच्छिन्ना -- इष्टकायाः यन्त्रं (instrument) यन्त्र तेन परिच्छिन्ना. अश्मतक्षा -- stone-cutter. टङ्कः - chisel. तष्ट्वा -- having cut off. इष्टकाचेता -- इष्टकाभिः चेता -- building a brick. land. वालुका -- sand. पाकपुटी -- kiln. शुक्तिः -- oyster. चतुरश्रम् - चतस्रः अश्रयः (angles) यस्य तत्. कवाटम् -- door. वातायनम् --window. प्रकृतिः -- material cause. विश्लिष्टम् -- disjoined घटयति -- closes. विघटयति -- opens. द्वारसन्धयः -- hinges. नियन्त्र्यते -- pass. of यन्त्र् (1 & 10 U.) fasten. अर्गलम् -- latch. तालकम् -- lock.

Lesson 27. (continued.)

दर्पणानुषक्ताः - glazed. किंनिमित्तम् -- for what reason. (words denoting cause, &c. are used in all cases). आलोकः -- luminosity लवणविशेषमिश्रा -- लवणविशेषेण (soda) मिश्रा. आग्नेयशिला -- flint. द्रवीकृता -- melted. आच्छाद्यते -- pass.

of छद् 10. U. to cover. पटलम् -- roof. कुवेष्टका -- tile. कोष्ठ: -- room. कक्ष्या -- inner apartment. उपरिभूमिका -- upstair. विश्रम्यते -- impersonal of श्रम्. 4. P. with वि to rest. पिधानम् -- hiding.

## Lesson 28. Backbiting.

कैङ्कर्यम् – servileness. उपासाञ्चक्रिरे -- perf. of आस् (2 A.) with उप to wait upon. जिज्ञासमान: -- ज्ञातुं इच्छन् desiring to know. वनगर्दभ: -- zebra. अवजानाति -- disregards. अज्ञासिषम् -- aor. of ज्ञा. अन्विष्यन् -- searching. कोष्णम् -- lukewarm. श्रुतमात्रम् -- श्रुतमेव. अभिप्लुत्य -- ind. p. p. of प्लु 1. P. with अभि to bound.

## Lesson 29. The king and the prisoners.

महाकारागृहम् -- chief prison. प्राड्विवाक: -- judge. अन्यथाग्रह: -- mistake. ययाचिरे -- perf. of याच् 1. A. to beg. हन्त -- alas! धनपेटिका -- धनस्य पेटिका (purse). चोरितवान् -- one who stole. वस्तुम् -- ind. inf. of वस् to dwell. विसर्जय -- release. छिन्नशृङ्खल: -- छिन्ना शृङ्खला (chains) यस्य स:.

## Lesson 30. Agreeable verses.

निर्वृति: -- satisfaction. खल: -- talebearer. गुह्यम् -- secret. विरक्त: – free from passion. प्रवास: – going abroad. कोकिला: -- cuckoos. क्षमा — forgiveness.

## Lesson 31. Thoughtlessness.

दंपती -- जाया च पतिश्च. नकुल:—mungoose. विस्रब्ध: faithful. उत्सङ्ग:—lap. उपलालयन्तौ --pres. p. of लल् (10. U.) with उप to caress. पुमपत्यम्—पुमांश्च तत् अपत्यं progeny च. रेमे—perf. of रम् 1. A. to sport. कार्यान्तरव्यापृतौ—अन्यत् कार्यं कार्यान्तरं, तस्मिन् व्यापृतौ. अध्यासाञ्चक्रे -- perf. of आस् with

अनु. (sat with.) प्रतिपत्तिः - affectionate behaviour. कृषिः husbanding. मञ्चप्रसुप्तः मञ्चे (cradle) प्रसुप्तः. वापी - tank. मुहूर्तः - period, द्वारोपान्तः - द्वारस्य उपान्तः side. रक्तप्रवाहोपलिप्तः -- रक्तस्य प्रवाहेण उपलिप्तः (besmeared.) निर्वर्णयामास - marked attentively. दुर्दैववशात् unfortunately. विदारितवान् - one who tore. क्रोधान्धहृदया क्रोधेन अन्धं (unable to see anything.) हृदयं यस्याः सा. चिक्षेप perf. of क्षिप् 6. U. to throw. स्नेहौदार्यमधुरः - स्नेहेन औदार्येण च मधुरः (charming) निष्प्रतीकारः -- निर्गतः प्रतीकारो (remedy) यस्मात् सः. अनुतापः – subsequent regret or sorrow. पुत्रकल्पः -ईषद् असमाप्तः पुत्रः almost equal to a son. असमीक्ष्यकारिणी acting inconsiderately. निनिन्दुः – perf. of निन्द् 1. P. to reproach.

## Lesson 32. Metal.

व्यामिश्राः - compounded. क्षालनम् - washing. क्षोदनम् - crushing. भास्वरगौरम् bright and yellow. मृदु - soft. पात्राणि - beds of rivers. सिकतासङ्कीर्णम् - mixed with sand. माणकानि coins. दीप्तशुक्लवर्णम् - white and shining. उपलब्धिः – finding. अवरः - inferior. आनीलधूसरम् - bluish-gray. जलप्रणाल्यः - water pipes.

## Lesson 33. Courage.

निभृतं -- ind. unperceived. अबाधन्त - imperf. of बाध् 1. A. to bother. त्रासनीयाः - त्रासयितुं (to terrify) योग्याः. अपरेद्युः - another day. सचकितम् - afraid. जग्राह - perf. of ग्रह् 9. U. to hold. समर्थयामास - firmly declared. अपराधिविचारणा - अपराधिनः विचारणा (investigation.) प्रतीक्षमाणः - expecting.

Lesson 34. (continued.)

लगुड: -cudjel. दुष्करा -difficult. गणना- problem. लेखनफलकम्-slate. मार्जन्-pres. part. of मृज् 2. p. to rub. प्रयोक्तुम् -- to bestow. प्रयुङ्क्ताम्- imp. of युज् 7. A. with प्र. धीरोदात्तचरित:- धीरं उदारं च चरितं यस्य स:. दशवर्षदेशीय:- nearly ten years old.

Lesson 35. Mercy.

वेपथु: – shiver. द्वित्रपदानि- द्वे त्रीणि वा द्वित्राणि, द्वित्राणि च तानि पदानि च. कुब्जीभूय ind. p. p. of कुब्जीभू (to become crooked.) स्फारकौतुका: स्फारं (extreme) कौतुकं (curiosity) येषां ते. विषीदसि सद् 1. P. with वि to regret.

Lesson 36. (continued.)

स्खलन्ति pres. part. of स्खल् 1. P. to stumble. तपस्विनी- helpless.

Lesson 37. The spider and its web.

वधविनोद:-- वध (killing) एव विनोद: (sport.) क्रान्तिशीक: -running away terrified. खड्गपाणि: -खड्ग: पाणौ यस्य स:. निभृतपदम् - निभृतं (noiseless) पदं यस्मिन् कर्मणि तत्. ओष्ठदंशिनी-one who bites the lips. अत्याहितं- great calamity. निराकुलम -unspoiled. त्रुटिताकुलम् त्रुटितं (torn) च आकुलं च.

Lesson 38. Sun and wind.

घटिकायन्त्रं -time-piece. त्याजयति -causes to throw off. निर्णयसंवित् -निर्णयस्य संवित् (agreement.) प्रावारावृतशरीर: -प्रावारेण आवृतं शरीरं यस्य स:. मुष्टि: – clenched hand. जुगोप -perf. of गुप् 1. P. to protect. वायवीय: -वायोरयं वायवीय:. जलबाष्प:-aqueous vapour. ऊष्मा -heat अनुनय:-conciliation.

## Lesson 39. The Himalayas.

कोशः-a distance of 2 miles. बहुश्रेणीरूपः-बह्व्यः - श्रेण्यः (range) रूपं यस्य सः. अनूपप्रदेशाः- अनूपाः (apueous) च ते प्रदेशाश्च. बहुप्रस्रवणोपेता -बहुभिः प्रस्रवणैः (springs)उपेता. भृगवः - cliff. अतिशेते -excels-

## Lesson 40. Advice.

अपव्ययः -waste. परमस्नेहास्पदम् -परमस्य स्नेहस्यास्पदं object. आयुः-duration of life. तदात्वम् -current moment. प्रोषितागतः one who has returned from foreign travel. सम्परिष्वजन्ते —स्वज् 1. A. to embrace with सं and परि. तन्द्री laziness. कल्याणम् – happiness.



# Sanskrit Reader.

## No. III.

BY

**T. GANAPATI SASTRY,**

PRINCIPAL,

**H. H. The Maharajah's Sanskrit College,**

TRIVANDRUM.

(SECOND EDITION.)

PRINTED & PUBLISHED

BY

**K. NARAYANA IYENGAR,**

*Proprietor—"Bhaskara" Press,*

TRIVANDRUM.

**1907.**



**Price 7 annas.**

॥ श्रीः ॥

# तृतीया पाठावली.

अनन्तशयनस्थ-

राजकीयसंस्कृतविद्यामन्दिराध्यक्षेण

तरुवै. गणपतिशास्त्रिणा

विरचिता.

(द्वितीयं संस्करणम्)

अनन्तशयनस्थ-

भास्करमुद्रालयाधिपतिना

के. नारायणय्यङ्गारित्यनेन स्वकीयमुद्रालये

मुद्रयित्वा प्राकाश्यं प्रापिता.

१९०७ क्रिस्त्वब्दः.

मूल्यं ७ आणकाः.

# PREFACE.



To those who have read the second reader of this series, the lessons in this—the third—present little or comparatively no difficulty except perhaps that required by a progressive series. It contains both prose and poetry pieces mostly selected from the various readers in other languages as well as from the Maha Bharata and other Standard Sanskrit works. In the object-lessons and in those on biology and on morals, special care is taken to avoid all unnecessary length and minute details. The Samasas used are not too long; the main object of using them being to acquaint the students with a method of giving concise expression to their thoughts. With a view to enrich the vocabulary of students difficult synonyms are used whenever an idea is repeated. Sometimes suggestive words are coined to express ideas new to the language.

T. G.

# निवेदना.



एषा तृतीयपाठावलीत्युच्यते. द्वितीयां पाठावलीमधीतवतां बालानां सुखेन ग्रहणयोग्याः पाठा अस्यां योजिताः. ते च गद्यरूपाः प्रायेण भाषान्तरपाठपुस्तकेभ्य उपात्ताः, पद्यरूपास्तु भारतादिभ्यः सङ्कलिताः. अत्र मनुष्यपशुपक्षिणां चरितं, स्थावरस्य स्वभावः, लौकिकी नीतिरित्येतावान् विषयोऽनतिसङ्ग्रहेण बालहृदयग्राहिण्या रीत्या प्रतिपादिताः; अदीर्घाः समासा अर्थसंक्षेपणरीतिज्ञानाय कतिपये प्रयुक्ताः; प्रसिद्धपदेन प्रथमं निर्दिष्टस्यार्थस्य पर्यायपदैः पुनः परामर्शः पर्यायपदपरिचयार्थं क्वचित् क्वचित् कृतः. पुराणकाव्यादावप्रसिद्धस्यार्थस्य प्रतिपादनाय नवोल्लिखितान्यपि कानिचित् पदानि झटित्यर्थसमर्पणे समर्थान्येव प्रयुक्तानि.

त. गणपतिशास्त्री.

# विषयानुक्रमः.





श्रीः ॥

# तृतीया पाठावली.

---

### मनुष्यस्य देहः शिरश्च.

विधाता तावदस्मानसृजदिति यूयं जानीध्वे. यथा वयं वस्तुं गृहाण्युत्पादयामः, एवमीश्वरोऽस्मज्जीवात्मनो वासाय शरीरं निर्मितवान्.

आत्मन आयतनभूते शरीरे शिरः कायः पाणिपादमिति त्रयो मुख्यभागाः सन्ति. अष्टवितस्तिमात्रेऽस्मिन् देहे शिर एव प्राधान्यादुत्तमाङ्गमित्युच्यते. यथा तदात्मन इच्छयोन्नन्तुमवनन्तुं पार्श्वयोर्विवलितुञ्च पटु स्यात्, तथा तत् सन्निवेशितम्. प्रासादस्थ इव वातायनविवरेणास्मन्मुखावस्थितस्य नयनस्य द्वारेणात्मा समन्ताद् विद्यमानानि वस्तूनि पश्यति. शिरसो भागौ कपालं मुखञ्च. कपालमतिदृढविचित्रसन्धानैरष्टभिरस्थिभिर्निष्पादितम्. तदभङ्गुरत्वाय प्रत्र-

णाकारमनुपघाताय लोमशाभिस्त्वग्भिराच्छादितं च वर्त्तते.

कपालान्तर्मस्तिष्कं वर्त्तते. तदेव बुद्धेः स्थानं प्राणाधारेष्वन्यतमं च. मुखे नयनाभ्यां सह नासाऽऽस्यं श्रोत्रे च वर्त्तन्ते.

मानुष एक एव स्वभावतः शिर उन्नमय्य चरतीत्यतः स इहफलादुत्कृष्टममुत्रफलमर्जयितुमर्ह इति, अन्ये सर्वे जन्तवोऽधोमुखा एव सञ्चरन्तीत्यतस्त इहसुखमात्रायार्हा इति च शक्यमुत्प्रेक्षितुम्.



२. सद्बालानां लक्षणम्.

सन्तो बालाः प्रातस्तरां प्रबुध्येरन्; शय्योत्थायमीश्वरं ध्यात्वा स्नानेन शुचयो भवेयुः, यतः शारीरशौचमारोग्यमुख्यकारणेष्वन्यतमम्. अनन्तरं ते धौतमंशुकं परिधाय यथाकुलाचारं जपित्वाधीतं पाठं सम्यगभ्यस्येयुः; अथ यथोपपन्नमन्नमभ्यवहृत्य प्रतिदिवसं यथाकालं पाठशालायां सन्निदधीरन्. नतु जातु-

चित् शिरोवेदनेति वा, उदरबाधेति वा, गृहे श्राद्धादिकमिति वा वृथा व्याजानुल्लिखन्तो गृह एव विश्राम्येयुः; कुत इति चेत — ते तारुण्यावस्थायां जीविकाव्यापारेषु तथा व्याजोल्लेखनमशक्यमिति स्वयमेव जानीयुः. अभ्यस्तं पाठं तत्र सम्यग्विशोध्योपाध्यायस्योपदेशानेकाग्रमानसा गृह्णीयुः.

किञ्च ते पाठशालायामुपाध्यायस्य सच्छात्राणां वा वैमनस्यमल्पमप्यजनयन्तः सर्वदैव विनीता वर्तेरन्; स्वानि पुस्तकानि पांसुस्वेदादीनामनुषङ्गाद्रक्षेयुः; पुराणान् पाठान् मुहुश्चिन्तयेयुः, तत्र सम्यगप्रतिभातान् विषयान् सच्छात्रं गुरुं वा पृष्ट्वावधारयेयुः.

दैनंदिनाध्ययने वृत्ते गुरुणा दत्तायां गृहगमनाभ्यनुज्ञायां विद्यया सह कायबलस्याप्यवश्यार्जनीयतया ते समानवयस्कैर्बालैः साकं क्रीडेयुः. अव्यायामो हि जनो रोगी भवेत्; रोगिणश्च बलं हीयेत; अबलश्च महापण्डितोऽपि परस्यात्मनो वा नेषदप्युपकाराय कल्पेत.

एतच्च मुख्यं लक्षणं सतां बालानां—यत् ते मातापित्रोर्हितोपदेशवाक्यान्यादरेण शृण्वन्तः सर्वेषु कृत्येषु तयोर्मतमनुसरेयुः.

यस्तु स्वच्छन्दवृत्तिः पित्रोर्हृदयं दुनोति, स बालको दण्डनामवश्यं लभेत.

---

३. भूमिः स्थलम्.

अस्माभिरध्युष्यमाणा भूमिर्विपुला नारङ्गफलवन्निस्तलाकृतिश्च विद्यते. प्रायोऽस्याः $\frac{2}{3}$ भागौ, जलमयौ, $\frac{1}{3}$ भागः स्थलम्. यद्येवं भूमेरवस्थितिर्नाभविष्यत्, तदा मनुष्यभोग्यः सर्वोऽपि स्थलभागो बहोः कालात् प्रागेव भृशमुच्छुष्को मरुरभविष्यत्. भूमावुन्नताः पर्वता गिरिपादा निम्नदेशा आजयश्च सन्ति. पर्वतेषु प्रस्रवणानां तच्छिखरेषु हिमघनानाञ्च भावात् तेभ्यो नगनिम्नगाः सिन्धवश्चोत्पद्य समन्तात् स्यन्दमानाः स्थलं कृष्यर्हं कुर्वन्ति. अनातिदन्तुरा भूमिराजिरित्युच्यते, समभूमिरिति च. उन्नतेऽवनते समे वा प्रायः सर्वस्मिन्नपि स्थले नानाविधा वृक्षाः पुष्पलताः

सस्यानि तृणानि चोद्भिद्य भूमिमलङ्कुर्वन्ति. उष्णदेशेषुच्छायाया अवश्यमपेक्षणात् छायावृक्षा बहुला जायन्ते, स्तोकोष्णेषु तु न तथा. भूमेरतिशीतलयोर्दक्षिणोत्तरभागयोर्वृक्ष एव न प्ररोहति, किन्तु कुशानि लशुनानि तृणानि च केवलम्. भूमेरूर्ध्वे ऊर्ध्वे शैत्यस्य अन्तरन्तरूष्मणश्च क्रमेणाधिक्यमुपलभ्यते. भूमेरुपरिकपालं क्रोशपञ्चशतीमात्रमिति, ततस्तस्या गर्भे बहुप्रकारा लोहादयः पदार्थाः कथिता द्रवीभूय प्रवहन्तीति च पण्डिता अभ्युह्य वर्णयन्ति.

## ४. निर्बन्धः.

कुतश्चिद् ग्रामाद् ग्रामान्तरं गच्छन् पान्थः कश्चिद् द्रामिलः कस्यापि सरसस्तीरे स्थितस्य तरोरेककस्य मूले स्वीयमश्वं बद्ध्वा जलाभ्यर्णे पाथेयमभ्यवहर्तुमासाञ्चक्रे. तदा कश्चन पथिको यवनस्तत्र विश्रमार्थमवतीर्य स्वीयमप्यश्वं तत्र वृक्षे बन्धुं तदन्तिकमुपससार. तथाभूतं तमालोक्य स भुञ्जानो द्रामिल उच्चैः-

कारमाचचक्षे—'ममाश्वो बलवानदान्तश्च; दुर्बलं तवाश्वं मा तेन साकं भान्त्सीः' इति. यवनस्तु 'तत्रैव बध्नीयाम्' इति सनिर्बन्धस्तं बद्ध्वा तत्रैव तीरे नातिनिकटोपविष्टो भोक्तुमारेभे. ततः क्षणान्मिथ आरब्धकलहं तदश्वयुगलं यावत् तत्स्वामिनौ द्रुततरमागत्य विनिवारयतस्तावद् द्रामिलाश्वो यवनाश्वं निर्दशनैः पादाघातैश्च प्रमीतं चकार. अथ कुपितो यवनो हठाद् द्रामिलमाकर्षन् प्राड्विवाकमुपगम्य 'ममाश्व एतदश्वेन हतः; तदनेन तन्मूल्यं दाप्यम्' इति प्रार्थयत. ततः 'किमत्रोत्तरं वदसि' इति प्राड्विवाकेन बहुकृत्वः पृष्टोऽपि द्रामिलः किमप्यब्रुवन् मूक इव स्थितः. तदा प्राड्विवाको यवनं जगाद—'मूकः खल्वसौ; किमनेन कुर्याम्' इति. पुनर्यवनोऽब्रवीत्—'आर्यमिश्र ! कुहकोऽयं न तु मूकः यतो मय्यश्वबन्धनाय वृक्षमूलमुपसरति "तत्र त्वदश्वं मदश्वेन सह मा भान्त्सीर्मा भान्त्सीः" इत्युच्चैरुद्घोषति स्म' इति. प्राड्विवाकस्तद्वाक्यं श्रुत्वा प्रहस्य 'तर्हि त्वद-

श्चमूल्यमनेन दापयितुं न कश्चिद् न्यायोऽस्ति' इत्यु-
क्त्वा यवनं विसर्जयामास.

५. वञ्चको भृत्यः.

कोऽपि धनिको महता मूल्येन क्रीतमेकं मरकतरलं स्वभृत्यस्य हस्ते समर्प्य 'रत्नमिदं मम गृहिण्याः करं प्रापय' इत्युक्त्वा तं प्राहिणोत. स भृत्यो यथानियोगमकृत्वा तद्रत्नं लोभात् स्वायत्तं चकार. पश्चाद् गृहमागत्य 'क्व तद् भृत्यानीतं रत्नम्?' इति धनिके गृहिणीं पृच्छति सा 'न किमप्यहं जानामि' इत्यवोचत्. सद्यः स्वामिनाहूय 'अपि तद्रत्नं यथानिदेशं प्रापयः?' इति पृष्टो भृत्यः 'अथकिं, प्रापयम्' इत्युवाच. ततो धनिकेनममर्थं निवेदितो राजा भृत्यमानाय्यापृच्छत. तदापि स 'मत्स्वामिगृहिण्याः करे रत्नमर्पयम्' इत्येवाब्रवीत्; तत्र च साक्षिसत्तां प्रति राजनि पृच्छति द्वौ साक्षिणौ विद्यमानावाह स्म. अथ तावप्यानायितौ भिन्नदेशस्थौ कारयित्वा राज्ञा प्रथमं

चोदिता धनिकगृहिणी 'भृत्यो मरकतं मह्यं न दत्त-वान्' इत्यब्रूत. ततो धनिको भृत्यश्च रत्नस्य प्रमाणं प्रति प्रत्येकं पृष्टौ 'तिन्त्रिणीबीजमात्रं तद्' इत्यब्रूताम्. साक्षिणोस्तु प्रत्येकं पृष्टयोरेको 'द्राक्षाफलप्रमाणम्' इति, अपरो 'लिकुचप्रमाणम्' इति च व्यब्रूताम्.

एतेन राजा कूटसाक्षिणावेनौ निश्चित्य तयोर्दण्डमकल्पयत. पश्चादेतौ सानुतापौ सत्यं विज्ञाप्य 'क्षमस्वापराधम्' इति राजानं प्रार्थयाञ्चक्राते. धूर्तो भृत्यस्तु स्वप्रयुक्तायाः परवञ्चनायाः स्वानर्थहेतुतां दृष्ट्वा तद्रत्नं प्रत्यर्पयाम्मास. राजा च तद् गृहीत्वा धनिकाय ददौ.

---

६. शीलम्.

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः ॥ १ ॥
वृत्तं यत्नेन संरक्षेद्वित्तमायाति याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ २ ॥

यथा मलिनवस्त्रेण यत्र क्वाप्युपविश्यते ।
एवं चलितवृतेन वृतशेषं न रक्ष्यते ॥ ३ ॥
न कुलं वृत्तहीनानां प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४ ॥
अकुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्दान्तः स कुलीनशताद्वरः ॥ ५ ॥
शीलं रक्षतु मेधावी प्राप्तुमिच्छुः सुखत्रयं ।
प्रशंसां वित्तलाभं च प्रेत्य स्वर्गे च मोदनम् ॥ ६ ॥
विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्वत्र वै धनम् ॥ ७ ॥
भुङ्क्ते मितं यः कृतसंविभागो
मितं च निद्रात्यमितं प्रयस्य ।
स्वं याचितश्च द्विषतेऽपि दत्ते
जहत्यनर्थास्तमुदारशीलम् ॥ ८ ॥



### ७. विज्ञानफलम्.

'ज्ञानं सर्वार्थसाधनम्' इति वाक्यं विद्वन्मु-

ख्यात् कोऽपि राजा निशम्य तस्य यथार्थतां परीक्षितु-कामः स्वपुत्रयोर्द्वयोः कनीयांसं शास्त्राध्ययनाय सदा-चार्यस्यान्तेऽवासयत्, ज्येष्ठाय च कालेकाले प्रचुरं ध-नमात्रं ददानोऽवर्तत. क्रमेण कनीयान् विद्यायां स-दाचारे च परिनिष्ठितोऽभवत्. ज्येष्ठस्त्वनुक्षणमुपैधमाने धने मदमानभरितो बभूव. तयोर्यौवनदशामधिरू-ढयोः कुतोऽपि हेतोर्दवीयान् विदेशो गन्तव्य आसीत्. पूर्वजः सञ्चितं स्वधनमखिलं गृहीत्वा तमभि प्रतस्थे. अनुजः पुनर्विद्यामेव विदेशे सहायं मन्यमानः स्तो-कमपि धनमनादाय तमन्वगच्छत्. प्रयाणके क्वचिद्रा-त्रौ चौरेषु धनपेटिकां लुण्टितुमुद्युञ्जानेषु दैवात् तत्स्वा-मी प्राबुद्ध. ततस्ते तामलुण्ठित्वैव पलायन्त. अथापि तदा प्रभृति त्यक्तनिद्रं दिवानिशं धनरक्षणार्थे खिद्य-मानं भ्रातरं दृष्ट्वानुजेनापि तत्र साहाय्यं कृतमासीत्. ईप्सितं च देशं तयोरासादितवतोर्ज्येष्ठः कनिष्ठाद् वियु-ज्य विवेकशून्यतया वृथाविनियुक्तसर्वद्रव्योऽधमर्णी-भूयान्ते कारानिरोधं प्रपेदे. कनिष्ठस्तु तत्रत्यं राजकीयं

विद्वत्समाजमाश्रित्य तत्संवासरसिकोऽवर्तिष्ट. श्रुत्वा चास्य गुणोत्कर्षं तद्देशाधिप एनमाहूय स्वान्तिके वासयांबभूव; सुप्रीतश्चास्मै कन्यामात्मनः संप्रददे; सदारं चैनं प्रभूतधनपरिवारं कृत्वा स्वदेशं प्रति प्रास्थापयत्.

इत्थंभूतमेनं प्रत्यागतं वात्सल्यात् पिता भृशमभ्यनन्दत्. काले स कियति व्यतीते ज्ञानसत्यनीतिभिर्धैर्यदयादिभिश्च महागुणैः शोभमानं राजपदार्हमेनं मन्यमानः स्वराज्येऽभ्यषिञ्चत्. अथ प्राप्तराज्योऽयं विज्ञाय चरमुखाज्ज्येष्ठवृत्तान्तं भृशदुःखितस्तूर्णमेव तमृणाद् विमोच्य स्वपुरमानिनाय. एतेन—

“अशेषाभ्युदयोत्पादनिदानत्वान्न केवलम् ।
इतरानपहार्यत्वादपि विद्योत्तमं धनम् ॥”

इत्ययमर्थो निर्णीतः.

---

### ८. अश्वो गर्दभश्च.

मृगा नाम नानाजातीयाः. तत्र केचिदारण्याः केचिज्जानपदाः. तेषु केचिन्मनुष्याणां भृशमुपकाराय

भवन्ति. अश्वा हि तीक्ष्णबुद्धयो महनीयाः मृगाः. वन्याश्वा गर्दभेभ्योऽपि निकृष्टरूपाः. उभये चैते एष्याखण्डमध्ये बहुलाः सन्ति. अश्वाः स्वं स्वामिनं सम्यग् विजानन्ति; तस्य कैङ्कर्यं निर्व्याजमाचरन्ति; तद्वचनतात्पर्यं, प्रग्रहेण जानुभ्यां चरणाभ्यां च तेन क्रियमाणाः संज्ञाश्च विदित्वा तदनुसारेण वर्तन्ते. जवनास्ते निमेषद्वयेनार्धक्रोशं गच्छन्ति. पारसीकदेशोत्पन्नास्त उत्तमा इति प्रसिद्धाः. तान् पारसीकाः कुडुम्बानीव पुष्णन्ति. वृषभा इवाश्वाः शकटान् हलानि च कर्षन्ति; मनुष्यांस्ततोऽपि गुरुतरान् भारांश्च वहन्ति. गर्दभा अप्येवम्.

ग्रामगर्दभा अल्पाकृतयो गतौ बुद्धौ च मन्दाः. सहनतया निसर्गतो दान्ततया च ते न गण्यन्ते, न च रक्ष्यन्ते. तान् भारतीया मार्गपरिसरेषु, ग्रामबाह्यदेशेषु चाभ्यवहारगवेषणायै विसर्जयन्ति; तेषां पृष्ठेषु महान्तं भारमारोपयन्ति; तद्वशाच्च तान् स्खलतो दण्डप्रहारैर्विद्रावयन्ति. पुनररण्ये देशविशेषे च समु-

न्नता दृढदेहबन्धा बलवन्तो गर्दभाः सन्ति. पुरा प्रभवस्तान् वाहनीकरणेन रथ्यीकरणेन चोपायुञ्जत. अद्यत्वेऽपि ईजिप्त, स्पेयिन, अमेरिकादिदेशेषु जना गर्दभानत्यर्थमाद्रियन्ते. तत्र गर्दभानां पादा न स्खलन्ति. अश्वापेक्षया तेषां तीक्ष्णतरा बुद्धिः; आयुश्च दीर्घतरम्.

---

९. मूर्खा भृत्याः.

पुरा दक्षिणापथे बहुवित्तपरिजनः कश्चित धनिक आसीत्. स कदाचित् स्वशिबिकावाहिनो गवार्थे तृणानयनायादिदेश. तेऽवदन्—'वयं शिबिकावहनं विना नान्यत् कर्म कुर्याम' इति. स पुनरपि क्वचिद्दिने नष्टस्य गोवत्सस्यान्वेषणाय तानादिक्षत्. तदापि ते 'वयं शिबिकावाहिनो न गोपालकाः' इति वदन्तः स्वाम्याज्ञामत्यवर्तन्त. ततस्तेषां सद्बुद्धिमुत्पादयितुमिच्छुर्धनिकः शिबिकानयनाय तानाज्ञापयत्; उपस्थापितां शिबिकामधिरुह्य मध्याह्ने तैरुह्यमानः गोवत्सान्वेषणाय प्रस्थितः कण्टकाकीर्णासु ग्रामबाह्यस्थ-

लीषु शिबिकावाहांस्ततइतो गमयन् खेदयामास. ते चिरमुग्रातपे भारवहनाच्चङ्क्रमणाच्चोपहतजानुपादा 'इतः परं चलितुं न शक्नुमः' इत्यवसन्नगात्रा आचक्रन्दुः. स्वामी तान् निर्भर्त्स्य 'शिबिकावहनं युष्माकं नियोगः. अतो मा स्म तिष्ठत. गच्छत शीघ्रम्' इति चोदयन्नतीव श्रमयाञ्चकार. तदा प्रभृति लब्धविवेकास्ते न जातुचित स्वाम्याज्ञामुदलङ्घयन्.

---

### १०. अपत्यविवादः.

गृह एकस्मिन्नेकापत्ये द्वे स्त्रियाववसताम्. कचन रात्रौ तयोरेकस्या अपत्यं मृतमभूत्. तदादाय तन्मातान्यस्याः स्वपत्याः पार्श्वे निभृतं निधाय तदीयमपत्यं स्वयमपाहरत्. प्रभाते च ते 'जीवदपत्यं मदीयं मदीयम्' इति विवदमाने राजानमासेदतुः. स च साक्ष्यभावाद् निर्णयोपायं मनसिकृत्य वधाधिकृतमाहूय 'जीवतः शिशोश्छिन्नस्यैकमर्धमेकस्या अपरमर्धमन्यस्यै च दीयताम्' इत्यादिष्टवान्. तच्छ्रुत्वा तयोरेका

'न्याय्योऽयं निर्णयः. छिद्यतां शिशुः' इत्याह स्म. अन्या तु वेपमानावयवा 'राजन्! शिशुरेष तस्या एव दीयताम्; सर्वथा मैनं मारयत' इति प्रार्थितवती. ततश्चेयमेवापत्यवत्सला शिशोर्मातेति निश्चिन्वंस्तस्यै स शिशुं समर्पयितुमादिशत्; प्रत्यर्थिनीं च ताडयित्वा कारागृहे निवेशयामास.

११. (क) उपकारो न निष्फलः.

कदाचित् प्रातः कश्चन बालो गृहीतपाथेयो दिनान्तात् प्रागेव प्रतिनिवर्तितुं कृतनिश्चयो ग्रामान्तरं प्रस्थितः. मार्गे कोऽपि श्वा गच्छन्तं तमुत्पुच्छयमानः प्रत्यासदत्. श्वा क्षुत्पीडित इत्याकारेण विदित्वासौ बालः कृपार्द्रमना आत्मनोऽन्नहानिमगणयन् पाथेयात् कबळमेकं तस्मायार्पयत्. ततः किञ्चिद् दूरमतिक्रान्तोऽयं जरढं कञ्चिदश्वं मार्गपतितमालोक्य तस्य बुभुक्षातुरतया स्पन्दितुमपि शक्त्यभावं विज्ञायेत्थमचिन्तयम्—'यद्यहमस्य तृणाहरणार्थं कांश्चित् क्षणानुपयुञ्जीय, तदा स्वग्रामाय प्रतिनिवर्तनात् प्राक् सूर्यो

ऽस्तं गच्छेत्. चौरप्रचुरश्चायं पन्थाः. तथापि मृगरक्षणमेव परमो धर्मः' इति. ततइतस्तृणान्याहृत्य चासौ तस्याग्रे व्यकिरत्. तेषां चर्वणादश्व उपशान्तक्लमः शनैरुत्थाय चलितुं प्रवृत्तः. ततः किञ्चिद् दूरं गतः सरसि तिष्ठन्तमितिकर्तव्यतामूढमिव लक्ष्यमाणं काश्चित्पुरुषमवलोक्य 'भोः! किं तत्र करोषि?' इत्यपृच्छत्. 'भद्र! अहमन्धः; प्रमादात सरसि पतित इतश्चलितुं बिभेमि' इति स प्रत्युवाच.

बालको 'हन्तैवं मम समयो हीयते. अन्धश्चायं नोपेक्षणीयः' इति विचिन्त्य अवनतपूर्वकायः करं प्रसारयामास. तमवलम्ब्यान्धः पन्थानं प्रतिपन्नः 'कारुणिक! मत्प्राणत्राणकारिन्! न ते दुःखं भविष्यति' इत्याशिषा बालमभिननन्द; अकथयच्च— 'भद्र! इतो मदर्थे कालं मा हार्षीः. अहं कथंकथमपि स्खलित्वा स्खलित्वा गृहमासादयेयम्' इति. ततस्तदा ...नान्तस्य प्रत्यासन्नत्वाद् विघ्नापहृतस्य समयस्य प्रत्यापत्तये महान्तं वेगमाश्रित्य धावति बालेऽन्यः

m. obstacle

प्रत्यूह आपतितः. पङ्गुर्हि कश्चित् पथेण चरन् 'प्रभो! ईशस्त्वामभिरक्षतु. युद्धे नळिकभिन्नपादः पङ्गूभूतो दीनोऽहम्. क्षुन्मामतीव पीडयति. यत्किञ्चिदभ्यवहाराय देहि' इति बालमयाचत. बालः पाथेयभाण्डस्थं भुक्तशिष्टं सर्वं तस्मै समर्प्य द्विगुणवेगं धावन् दिनावसाने ग्रामान्तरं प्रापत्; तत्र च कार्यं निर्वर्त्य स्वगृहं प्रत्यागच्छन् कतिपयैः क्षणैः परितः प्रसृत्वरे तमसि भ्रष्टवर्त्मा किमपि वनं प्रविश्य बभ्राम.

१२. (ख) उपकारो न निष्फलः.

वने तस्मिन् स बालो यत्नेनान्विष्यन्नपि मार्गमनुपलभमानः क्वचन शिलातले शयितः 'अहो बत ममेदृशी भवितव्यता' इति साक्रन्दमरोदीत्. तदा प्रातर्विलीर्णाहारः स श्वा कमप्यल्पकं भक्ष्यपूलं ग्रन्थौ सन्दश्य यदृच्छयाऽऽपतंस्तद्ध्वन्यनुसारेण तदन्तिकमुपससार; तदग्रे च तं भारं चिक्षेप. बालस्तं श्लथीकृत्य तत्स्थं भक्ष्यजातमभ्यवजहार; 'अहो शुनेऽपि कृत उपकारो न व्यर्थो जात' इत्यभिधाय तदङ्गं च

प्रीत्या परामम‌र्श. ततः किञ्चिदिव शान्ते श्रमे सरणिगवेषणायै पुनरुद्यतस्य तनइतश्चरतस्तस्य पादौ तीक्ष्णकण्टकक्षतावभूताम्. तद्व्यथया गन्तुमशक्तस्तत्क्षणप्रसृते चन्द्रिकाप्रकाशे दिवासम्भावितमश्वं तत्र तृणानि भक्षयन्तं दृष्ट्वा तत्समीपमगमत्. ततः करतलपरामर्शैस्तमुपलाल्य यावदयमारुरुक्षामदर्शयत्, तावदश्वः स्वपृष्ठे तमारोप्य समीचीनं पन्थानमवहितः प्रापयांचकार. बालो 'यद्यहं प्रागिममश्वं नारक्षिष्यं, ध्रुवं तत्र कान्तारे महाक्लेशमन्वभाविष्यम्. दिष्ट्या सुकृतमकरवम्. न हि तत् फलमनुत्पाद्य विरमति' इति तुतोष.

ततो गच्छतस्तस्य द्वौ चौरावागत्य वस्त्राणि चोरयितुमारभेताम्. किन्तु पूर्वोपकृते शुनि तत्क्षण एव प्रधावितामिगते स्वपादौ दन्दश्यमाने, 'इतस्ते पापास्तिष्ठन्ति, शीघ्रमागच्छत, तान् निहन्मः' इत्युच्चस्वरायां च वाचि श्रूयमाणायां तौ चौरौ पलायिषाताम्. किमिदमिति च पश्चाद्दत्तदृष्टिः स बालो दिवाभुक्तस्वान्नशेषं तं पङ्कमालानैव तटाकादुत्तारितस्य

तस्यान्धस्य स्कन्धेऽधिरुह्यागच्छन्तमपश्यत्. अथ स पङ्गुर्जगाद—'तात! क्वचन मार्गद्रुममूले शयानावावां "कश्चिदेकाकी जनो गच्छति, तं प्रहृत्य मुष्णीवः, आयाहि" इति कामपि वाचमशृणुव. ततस्त्वामेवैकाकिनं प्रत्यागच्छन्तं सम्भावयन्तौ मदुपदिश्यमानमार्गे मां स्कन्धेन वहत्यन्धे द्वावपीहागत्य चौरत्रासनामुद्घोषणामकार्ष्व. सेयं दैवात् तवोपकारायाभूदिति महानावयोः प्रमोदः' इति. श्रुत्वा चैतद् बालो भृशमतुषत्; तदाप्रभृति च मनुष्ये मृगेऽन्यस्मिन् वा प्राणिन्यार्ते दृष्टे नियमेनोपकारपरो बभूव.

---

१३. मत्पुत्राः.

शिशिलिद्वीपे एतनाभिधानः कश्चिदग्निपर्वतोऽस्ति. स स्वभावात् शिखरेभ्योऽग्निं द्रुतशिलाद्रवांश्च कदाचिदुद्वमेत्. शिलाद्रवाश्च प्रच्युत्य पर्वतप्रान्तदेशेषु स्यन्देरन्. पुरा कदाचित् तान् बहुलमुद्गिरति तस्मिन् गिरौ तत्परिसरग्रामेभ्यो जनाः स्वस्वधनेषु प्रशस्तान्यादाय प्राणपरित्राणार्थमन्यत्राधावन्. तैः सह

स्वकीयधनानि गृहीत्वा गच्छन्तौ द्वौ भ्रातरौ जराजर्जरतया सहसा सहचरितुमक्षमं पितरं मातरञ्चावेक्ष्य 'आवां प्रसूय पुष्टवद्भ्यां मातापितृभ्यां श्रेष्ठं न किञ्चिद्धनं लोकेऽस्ति' इति मिथः कृतविमर्शौ सर्वस्वपरित्यागेनापि मातापितृरक्षणमेव परमं धर्मं निरचिनुताम.

ततश्च शिरःस्थं सर्वं प्रशस्तधनभाण्डजातं दूरे निरस्य ज्येष्ठः पितरमन्यो मातरं च पृष्ठे समारोप्य वहन्तौ भयशून्यं स्थलं प्रापयाञ्चक्रतुः. ताभ्यां च मातरपितरौ वहद्भ्यां यया वीथ्या प्रचलितं, तस्यास्तदा प्रभृति 'सत्पुत्रमार्ग' इति नाम प्रसिद्धमभूत्.

---

२४. जम्बुको, द्राक्षा च.

कदाचित् कश्चिज्जम्बुक आहारार्थमटाट्यमानः क्वचिद् द्राक्षालतायां लम्बमानं पीवरफलजालं मनोरमं वृन्तमेकमपश्यत्; उन्नम्योन्नम्य च तद् वृन्तमुच्चेतुं यावच्छक्ति प्रयत्नमकरोत; तथाप्युन्नतदेशस्थ-

तया तद् ग्रहीतुं न शशाक. एवमात्मोद्यमं विफलम-
वधार्य 'धिक्धिगम्लमेवेदं द्राक्षाफलम्; यदीच्छेयं, कि-
महमिदमनायासेन नोच्चिनुयाम्?' इति उपांशु जल्पन्
सावज्ञ इव स जगाम. एतेन लिप्सिते पदार्थे तदला-
भनिश्चयानन्तरमानिच्छाया अभिनयनमुपहसनीयमिति
फलति.

१५. शुनको बकश्च.

कश्चिदजपोतं हत्वा सगर्धं भक्षयतः कस्यचित्
शुनकस्य कण्ठनाले अस्थिशकलमेकमलगत. स तत्
स्वयमुद्धर्तुं कथञ्चिदप्यशक्नुवन् बकं कञ्चिदुपगम्य
'यदि त्वं मद्गलविवरलग्नमस्थिखण्डं दयया समुद्धरेः,
तर्ह्यवश्यमनुरूपं ते पारितोषिकं दद्याम्' इति प्रह्वः
प्रार्थयत. बकश्च 'तथा' इत्यभिधाय, दीर्घां स्वग्रीवां
व्यात्ते तदास्ये प्रसार्य चञ्च्वग्रेण शनैस्तदस्थिखण्डं
बहिर्निस्सारयामास. ततः 'क तत् त्वया प्रतिश्रुतं पा-
रितोषिकम्' इति पृच्छन्तं तं बकं 'अरे मूढ! मद्द-
न्तान्तरालोपगतं तव शिरो झगित्यदशता मया यद्-

पेक्षितं, तत् किमनुरूपं ते न पारितोषिकम्?' इति स उक्तवान्. एतेन क्षुद्रेषु प्रत्युपकारप्रत्याशा न कार्येति सिध्यति.

---

१६. उदरं अवयवान्तराणि च.

कदाचिदवयवाः सर्वे सम्भूय 'कुक्षिं पूरयितुमस्मासु श्रद्धयानुवेलं प्रयस्यत्सु फलमेव केवलमस्मत्प्रयासस्यानुभवन् स्वयमयं तूष्णीमास्त' इत्युपजातासूयाः कुक्षिणा सहाकलहायन्त. ततः 'अद्यारभ्य कुक्षिं न वहेव' इति पादयोः, 'आस्ये नान्नमर्पयेव' इति करयोः, 'अन्नमादाय न गिरेयम्' इत्यास्ये च वदत्सु, दन्ता 'नान्नादिकं मृदूकुर्याम' इत्यब्रुवन्. 'अन्नं नान्तरवतारयेयम्' इति कण्ठनालमकथयत्. एवं मिथः कृतसंविदः सर्वेऽवयवा दिनद्वयं निर्व्यापाराः स्थिताः. तृतीये दिवसे कुक्षावाहारानर्पणात् प्राप्तकार्श्यंयातनाः सानुतापाः सद्यः स्वस्वकर्मसु यथापूर्वं व्यापरितुमारेभिरे. इत्थञ्च सर्वासु जातिषु कञ्चित् प्रधानं कृत्वा

कैश्चित् तदुपासना कर्तव्यैवात्महितायेति फलति.

---

## १७. नासा चास्यं च.

मुखस्यैकदेशभूतया नासया गन्धं गृह्णीमः. सास्मत्सुखविरोधिनो वस्तुनः सत्तां आरादागमनं च निवेदयति; अचारोरभ्यवहारस्य कबलनं नानुमन्यते. एतदर्थमेवास्यस्य ऋजुरेखोर्ध्वभागे सा भगवता संश्लेषिता. तद्द्वारा श्वसिमो वयम्; प्राणाश्च श्वसितेन ध्रियन्ते. मृदुलभेकमस्थि नासानालदण्डो भूत्वा नासारन्ध्रे विभजते. तत्र विद्यमानानि लोमानि परागादेरन्तःप्रवेशं वारयन्ति. पन्थाः कश्चिन्नेत्राभ्यां नासामुपतिष्ठते; तेन नयनयोरश्रु मुञ्चतोर्नासिका निष्यन्दिनी भवति. एवं नासाया आस्यान्तस्य च द्वारमस्ति.

अस्माकं व्याहरणे भोजने च करणमास्यम्. ओष्ठौ दन्तान् पालयतः. अत एतौ दन्तवासश्शब्देनोच्येते. आहारं च तौ तेषु लघूकुर्वत्सु बहिरवपाताद्रक्षतः. उच्चारणे च केषाञ्चिद्वर्णानां तावनुकूलौ भवतः. दन्ता ऊर्ध्वपङ्क्तावधरपङ्क्तौ च षोडशशः द्वात्रिंशत्

सन्ति, राजदन्तौ विशालौ सतलौ चारू च. ताभ्यां वयं दशामः. तदनन्तरं स्थिताः श्वदंष्ट्रसदृशा निशिताग्रां रदना अभ्यवहार्यखण्डने, पार्श्विका दन्ताः सतलत्वात् सुखजीर्णयानुगुण्येनाभ्यवहारमृदूकरणे चोपयुज्यन्ते.

आस्वाद्यस्य रसमास्योर्ध्वभागेन संयुक्ता जिह्वा वेदयते. वर्णविशेषान् प्रति तयोरुत्पत्तिस्थानतापि वर्तते.

मनुष्यभिन्नाः प्राणिनः स्वाभिप्रायमुच्चावचैर्ध्वनिभिराविष्कुर्वन्ति; भाषणं तु तेषामशक्यम्. मनुष्यः खल्वेकः स्वाशयं वाचा प्रकाशयितुं शक्तः.

---

१८. जडसहवास. परमानर्थः.

नानारूपाणि दर्शनीयानि नगरे सन्तीति श्रुतपूर्वी कश्चिज्जडस्तानि द्रष्टुकामो दूरात् स्वग्रामात् किञ्चित् स्वस्यालाध्युषितं नगरं जगाम; तत्र स्यालगृहे रात्रौ सर्वेषु भुञ्जानेषु प्रदीपमार्जिरे कमपि दीपविशेषं

ददर्श; विस्मितश्च स्यालं पप्रच्छ 'किमिदम्' इति. नागरिकोऽस्य जडिमानं मनसोपहसन्नुवाद 'स एष दुष्प्रापः सूर्यशावको नाम सांयात्रिकैर्दवीयसः समुद्र-द्वीपादिहानीत' इति. स भ्रान्तो यथाजातः 'ईदृशं व-स्त्वस्मद्ग्रामस्था वीक्षमाणा विस्मयेरन्' इति मत्वा दीपलुण्ठनायावसरप्रतीक्षी स्थितः. भुक्त्यनन्तरं च स-र्वेषु स्वस्वकर्मणि व्यासजत्सु स ग्राम्यः 'स्वग्रामं प्रति प्रस्थानसमये नेष्यामी'ति कृतनिश्चयस्तं दीपमन्या-विदितं गृहीत्वा तस्य गृहस्य पटलान्तराले निलीन-यामास. क्षणेन तत्र सन्दीप्तोऽग्निः पटलं गृहं तद्गतं धनं च निर्ददाह. तत्र शान्तप्राये ज्वलने गृहस्वामि-न्यौपवेशिकेषु च दग्धावशिष्टं विचिन्वानेषु ग्राम्योऽपि अन्वेषणव्यग्रस्तत इतो भस्मकूटं परिवर्तयन्नुल्लोलयंश्च चचार. अन्यैर्विचये समापितेऽपि त्यक्त्वात्यक्त्वा लभ्य-मानमन्वेषणानुवर्तनेन श्राम्यन्तं तमपरे जगदुः— 'भद्र! किं नाम भवानतिचिरमन्विष्यन्नेवं क्लिश्यते!' इति. स बभाण—'गृहेऽग्निसंदीपनात् पूर्वं सूर्यशा-

बको मया गृहपटले निहितः. सोऽयमिदानीं गवेष्यमाणो न क्वापि लभ्यते' इति. तच्छ्रुत्वा जनास्तं सन्ताड्य सद्य एव नगरान्निष्कासयामासुः. किन्त्वेतावतापि स मूर्ख आत्मसन्ताडनकारणं न विदितवान्; न वा नागरिको नष्टं द्रव्यं प्रतिलब्धवान्.



१९. निष्कुटः केदारं नारिकेळः तालश्च.

वृतिभिर्भित्तिभिर्वा कृतपरिरक्षं, प्ररोपितौषधि गृहपरिसरस्थलं निष्कुट इत्युच्यते; वृतिभित्तिशून्यं सीमासेतुपरिवेष्टितं नियतजलोपक्लृप्तिकं स्थलं केदारमिति. तत्र निष्कुटे शाकोपयोगिन्य ओषधिलताः फलदायिनो वृक्षाः पुष्पप्रदा वल्ल्यश्च संवर्ध्यन्ते. केदारे गोधूमादीनि शूकधान्यानि शालयश्च फलन्ति. अनियतजलोपपत्तिके बहिःस्थले माषमुख्यानि शमीधान्यानि नीलीकार्पासादिकं च प्ररोहन्ति. कूपात् सरसश्च निष्कुटे जलमानीयते. अवृष्टौ जलाशयान्नद्याश्च नीरं

कुल्याद्वारा केदारं गमयन्ति कृपिकाः. अविच्छेदेन कृषिकरणात् केदारस्य सारो [illegible] इति कृत्वा तत्सम्पत्त्यर्थं तत्र गोमयादि दोहद [illegible]न्ति.

एतद्देशप्ररोहिषु स्थावरेषु मुख्यो ना[illegible]. तस्याङ्गमङ्गं सप्रयोजनं दृश्यते. तस्य मूलभागेनावपुलं पत्रैर्गृहपटलमावरणवृतिः पेटी च क्रियते; अपरिणतफलान्तर्गतं जलमुष्णसमयेषु पीतं स्वादुहितं भवति; परिणतं फलं खाद्यते. तैलयन्त्रनिष्पीडिताच्च तस्मात् स्नेहोऽवतार्यते. नारिकेळतैलं यूरोपखण्डे दीपवर्त्तिनिर्मितौ बहुलमुपयुज्यते. फलत्वक्तृणैर्दाम महारज्जुश्च निर्मीयेते. आस्तरणमपि तया ऊयते; फलकपालं पात्रस्थाने प्रतिनिधीयते; तेन चार्धितेन दर्वी निष्पाद्यते; फलकाण्डाद्रसश्च्योतति; तच्च सन्ताप्य मद्यमापादयन्ति; भूक्लेदश्च केरद्रुमो नित्यमपेक्षते.

तालद्रुमस्य तु जलावसेचनं नावश्यकम्. स-

स्यान्तरप्ररोहणायोग्ये सिकतिले स्थले सोऽतिशयेन वर्धते. अस्योपयोगः केरवद् वेद्यः.

---

### २०. उद्यमः.

उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यत्र वर्तन्ते तत्र दैवं प्रसीदति ॥ १ ॥

उद्यमेनैव सिध्यन्ति कार्याणि न मनोरथैः ।
हस्ते सुप्तप्रबुद्धस्य न ह्यायाति धनं स्वयम् ॥ २ ॥

यत् पूर्वजन्मविहितं कर्म तद्दैवमुच्यते ।
न तत् पुरुषकारेण विना सिध्यति जातुचित् ॥ ३ ॥

उद्योगिनः करालम्बं करोति कमलालया ।
तद्भिन्नस्य करालम्बं करोति कमलाग्रजा ॥ ४ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ५ ॥

सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ६ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं प्रमाणमिति कापुरुषा वदन्ति ।
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ७ ॥



## २१. सत्यम्.

अमेरिकाखण्डे संसृष्टदेशाभिधानस्य देशविशेषस्याधिपत्यमिदम्प्रथमं प्रतिष्ठापितवन्तं सुगृहीतनामानं (जार्ज) वासिन्तननामानं महाशयं प्रति काचित् कथास्ति. स किल बाल्ये कदाचित् स्वलब्धेन स्वल्पेन पारितोषिकधनेन खड्गमेकं चिक्राय. तेन खड्गेन गर्वायमाणः पितुरुद्याने ततइत ओषधिवृक्षशाखानां लवनचापलं सलीलमाचरन् पित्रातिस्नेहात् संवर्ध्यमानामजानन् बालबदरीमेकां छित्वापातयत्. तत्पिता समयान्तरे तत्र सञ्चरन् बालबदर्यास्तां दशां ददर्श; क्रुद्धश्च कर्मकरानाहूय ‘मत्प्रियतमेऽस्मिन् वृक्षे केनेदं साहसमाचरितम्’ इति विभावनां कुर्वन् स्थितः.

तदा बालो वासिन्तन आत्मकृतं दौष्टयमबुध्यमानः खड्गपाणिस्तत्रागतः. दृष्ट्वा तं पिताऽन्वयुङ्क्त—'अपि जानासि पुत्र! मम द्रव्यकोटेरभ्यधिकमिमं वृक्षं क एवमवस्थमकरोत्' इति. स बालस्तु निश्शङ्कमूचिवान्—'तात! न जाने तस्मिन् वृक्षे तादृशं तव प्रेमाणम्. अहमेव तं वृक्षमच्छिनदम्' इति. ततः कीदृशमयमपराधिनि दण्डं प्रणेष्यतीति चिन्ताव्याकुलेषु परिजनेषु सद्यः प्रशान्तकोपः पिता 'वरमेवंविधान् शतं वृक्षान्नाशयन्मम पुत्रोऽस्तु, नतु मिथ्यावादी' इति जल्पन् पुत्रमुपसृत्य पृष्ठे परामृशन्नभिननन्द.

---

## २२. पृथिवी जलञ्च.

भूमौ महदपां धाम महार्णव इति कीर्त्यते, अल्पस्तु जलस्य राशिर्जलाशय इति. महार्णवस्य न सर्वत्रैकरूपं गाम्भीर्यम्. यथा स्थलं शैलैराजिभिर्गर्तैश्च व्यतिकरितं बहुरूपं भवति, तथैव महार्णवः. अयं हि क्वचिदुत्तानः क्वचिन्निम्नः क्वचिच्चागाधः.

अस्य जलमेकान्तलवणम्. यदि तत् तादृशं न भवेत्, शुक्तं पूतिगन्धि दुष्टं भूत्वाल्पेनानेहसा जीवराशिं निबर्हयेत्. यद्यपि महार्णवे जलं मनुष्या न पिबन्ति, तथाप्यात्मनीनं लवणं तत उत्पादयन्ति. लवणं खल्वाहारस्य स्वदनीयतां देहसौख्यं च जनयति. पानार्हपयसो नद्या जलाधारस्य कुल्यायाः सरसश्चाभावे जना भूमेरन्तर्यावदुत्सदर्शनं खननेन कूपं निष्पाद्य ततो जलमुद्धृत्योपयुञ्जते. पेयेन जलेन प्रत्यग्रनिर्मलेन भाव्यम्. पेयजलशुद्धिविषये परिगृहीतश्रद्धाश्चेद्वयम्, अद्धा बहूनां हिंस्ररोगाणां विषया न भवेम.

महासमुद्रेषु प्रवालकीटा नाम यादोविशेषाः स्वदेहात् प्रादुर्भवतो विलक्षणान् पदार्थानल्पशः संगृह्याधस्तलात्प्रभृति चयनं कुर्वाणा नवान् गिरिसन्तानसन्निवेशानुत्पादयन्ति. आ च जलोपरितलादुत्थितेष्वेतेषु पर्वतेषु वीचीमालाभिघातात् ततः प्रच्युता मृदस्तरङ्गोपनीतास्तृणपर्णादिव्यतिकीर्णा मृदश्च स्थलतां प्रतिपद्यन्ते. एतु स्थलेषु पक्षिविष्ठाभिः सह बीजा-

नि पतन्ति. ततस्तृणेष्वोषधिषु वनस्पतिषु च प्ररुह्य प्रवृद्धेषु तानि स्थलानि मनुष्यावासार्हा द्वीपा भवन्ति. एषु कतिपये तत्काले मनुष्यैरध्युष्यन्ते. मानुषानधिष्ठिताश्च द्वीपाः सन्ति.

---

२६. श्वा मार्जारश्च. (क)

श्वा रक्षिवत् स्वामिनो गृहं चौराणां दुर्जनानां वा प्रवेशाद्रक्षति. शुनो ज्ञानं विमर्शनशक्तिः स्वामिनि भक्तिः कृतज्ञता चेत्येते गुणाः सन्ति. स प्रियमित्रतुल्यो गणयितुं शक्यते. स पोषकस्य ध्वनिं दर्शनादिकाश्च चेष्टा वेत्ति. आघ्राणवेदने तस्यासाधारणः पटिमा. तस्माघ्राणान्मृगानुपलभमानं दृष्ट्वा मनुष्यान्वेषणेऽपि तस्य चोदना पुरातनैराचरिता बभूव. सर्वं कर्म तेन शिक्षयितुं शक्यते. यूरोपखण्डे क्वचिदुत्तुङ्गायां गिरिश्रेण्यां पथिषु सान्द्रपतितं हिमं शिलावद् घनीभवेत्. तत्र पान्थेषु कदाचिन्निमग्नेषु तानाघ्राणादुपलभ्य तदुपरि संहतं हिमं नखैरुत्खाय निरस्य तद्गत्याहितं भ-

षणेनावेदयितुं समर्थां काञ्चित् कुक्कुरजातिं तत्रत्या जनाः संवर्धयन्ति. अजान् मार्गभ्रंशादपायाच्च त्रातुं कौलेयकानां नियोजनं जाबालानां साम्प्रदायिकम्. काश्चिदेव भषकजातय ईदृशेषु कर्मसु कुशला भवन्ति.

स्काटलण्डदेशाभिजनः कश्चित् स्वीयं शुनकं प्रत्येवं वर्णयामास—यथा 'मदीयः सारमेयो मम बहूनुपकारान् कृतवान्. स मया दीयमानं नियोगं दुस्साधमपि नानोपायैः साधितवान्. गाढान्धकारे कस्मिंश्चिन्निशीथे सप्तशतान्यजाडिम्भानामकाण्ड उपजातक्षोभाणि प्रद्रुत्य प्रत्यासन्नस्याद्रेः सानौ ततइतो व्यकीर्यन्त. अहं मत्सहचरश्च यावच्छक्ति कृतप्रयत्नावपि नैव तानि कथञ्चिन्नियन्तुमशकाव. "हन्त गतागताः सर्वेऽजपोता" इति मम प्रलपितं श्रुत्वा मद्भषको मन्ये सद्य एव ततः प्रस्थित इति; अन्धतमसे तस्मिंस्तमन्तिके स्थितमास्थितं वा नावामज्ञासिष्व. ततोऽन्वेषणवशादानिशावसानमतिदूरमटित्वा कञ्चिदप्यजपोतमनुपल-

भ्य निर्विद्यमानावुदिते सूर्ये गिरिप्रस्थात् प्रतिनिवृत्ता-वभूव "यथावृत्तं स्वामिने निवेदयावः" इति.

---

२४. श्वा मार्जारश्च. (ख)

प्रत्यायान्तौ च कुत्राप्यद्रिद्रोण्यां सङ्घीभूतानजपोतांस्तस्या मुखे तिष्ठन्तं समन्ताद् दीयमानदृष्टिं प्रतीक्षमाणमिव नौ दृश्यमानं तं श्वानञ्चाद्राक्ष्व. "अ-ष्टेषु डिम्भेषु नूनमेते कतिपये सम्भूयधाविनः शुनाव-रुद्धास्तिष्ठन्ति" इति मत्वा तानुपसृत्य गणितवद्भ्यामा-वाभ्यामविकला सा सप्तशती दृष्टा. "कथं पुनरयं श्वा कार्त्स्न्येन विशीर्णान् मेषार्भकानस्मिन्नर्धरात्रे समूहित-वान्, कथंवा प्रभातं यावद्रक्षितवान्" इति चिन्तय-तोर्यत्सत्यमावयोर्विस्मयो जातः. अनेनैकेन शुना साधि-तं कर्म न खलु शक्यमस्मत्पल्लीभवैरजाजीवैर्मिळितैरपि सर्वैः कथञ्चिन्निर्वर्तयितुम्' इति.

मार्जारोऽस्माकं क्षुद्रोपद्रवावहान् मूषिकादीन्

जन्तून् हिनस्ति. अयमावासस्थले परिचिते रज्यति नतु जने. अपिचैष च्छद्मवान् क्रूरशीलश्च. अयमतिचिरं कारितसंस्तवोऽपि प्रियैराहारैराराध्यमानोऽपि गृहे सहसंवर्धिनो मनोरमान् शकुनीन् रन्ध्रेषु प्रहृत्य भक्षयेत्. न तावज्जाहकेन जलभिष्यते. क्रुध्येच्चेदयं, शूत्कृत्य तीक्ष्णैर्नखरैर्गाढं विदारयेत्; यदि त्वेष तुष्येत्, नखान् संकोच्यान्तराकर्षेत्; तदानीं च तस्य पदानि राजपट्टवन्मृदुलानि दृश्येरन्. अस्य शुनश्च शाश्वतो विरोधो लोके प्रसिद्धः.

२५. गौः महिषी अजा च.

ग्राम्येषु पशुषु मानुषोपयोगी कश्चिज्जन्तुर्गौर्नाम. गोः क्षीराद्दधि तक्रं नवनीतं दुग्धघनश्च जायन्ते; गोचर्म मृदूकृतं तुरङ्गोपकरणायोपानदादये च कल्पते; विषाणेन च तक्षणसंस्कृतेन निर्मीयते पात्रं सम्पुटकः कङ्कतं त्सरुरन्यानि च नानोपकरणानि; खुरोऽग्निपक्वो वज्रलेपो भवति; अस्थीनि चेङ्गालितानि

क्षेत्राणामुत्कृष्टो दोहदः. गौः स्वभावादहिंस्रा मनुष्यवश्या च. इयं हरिणादिवद्रोमन्थं वर्तयति. एषा हि यावदपेक्षं गृहीतं पलालादिकमभ्यवहारं प्रथममखण्डितमेव निगिरति. स च चतुर्षु तदीयेष्वाहाराशयेषु प्रथमाशयद्वारेण द्वितीयाशयं प्राप्य स्थितः कैश्चित् क्षणैः सरसतामुपयाति. पश्चादनया सुखासीनया तथाभूत अभ्यवहार आस्ये प्रत्यानीय यथावदवखण्ड्य निगीर्णः क्रमात् तृतीयं चतुर्थञ्चाहाराशयं गत्वा जीर्यति. गवा च समानप्रयोजना महिषी; तथापि गौरिव न चारुरूपा नच शान्तस्वभावा. महिषा हलं शकटं च कर्षन्ति. प्रायो लुलाया न दर्शनेन, न श्रवेणन, किन्त्वाघ्राणेनैवार्थं विदित्वा गच्छन्ति. अत एव ते धावनसमये नियमेन ऋजून्नमितनासिका दृश्यन्ते. विषाणं च माहिषं सारवत्तमम्. तत्र श्लक्ष्णीकरणं सम्यक् फलति.

एडकः शान्तात्मा भीरुश्च. छगलस्त्वतिधीरः; खरखिलेषु गण्डशैलेषु भीषणेषु च गिरिशृङ्गेष्वपर्यस्तोऽस्खलितश्च प्लुतानि कुरुते. मेषलोमभिरुच्चावचाः क-

म्बळाः सन्तन्यन्ते. मेषलोममयाः कश्मीरकम्बलाः गुणतोऽर्घतश्चोन्नता लोके गण्यन्ते. तुर्भीक्षीरं गोक्षीरान्मेदस्वितरं दर्शनीयतरं च. पुष्टिदत्वाद् भेषजत्वाच्च तन्मन्दाग्नीनां पथ्यमभ्यवहार्यं भवति.

---

२६. ऋतवः.

उत्तराहि भारते यूरोपे उदगमेरिकायां दक्षिणद्वीपेषु च प्रत्यब्दमृतवश्चत्वारः. ते च वसन्तो ग्रीष्मो हेमन्तः प्रावृडिति चोच्यन्ते. दक्षिणभारतस्य प्राग्भागेषु ऋतवः प्रावृट् शरद् हेमन्तः शिशिरो वसन्तो ग्रीष्म इति षट्. तत्राद्यः सिंहकन्ययोर्मासयोर्युगलमुच्यते, द्वितीयस्तुलावृश्चिकयोः, तृतीयो धनुर्मकरयोः, चतुर्थः कुम्भमीनयोः, पञ्चमो मेषवृषभयोः, षष्ठो मिथुनकुळीरयोः. एषु वसन्तो द्रामिलनां हृद्यः कालः. अत्र पक्षिणः सामोदं खेलन्तः कुलायनिर्माणमारभेरन्. वनस्पतयश्च किसलयिताः प्ररूढदलवितानाः कोरकिता भूत्वा प्रफुल्लैः पुष्पैर्विराजेरन्. क्रमेण पत्रेषु प्रसू-

नदलेषु च म्लायंम्लायं च्यवमानेषु फलकलिकाः प्रादुर्भूय शलाटुभूता ऊष्माभिघातात् क्रमेण परिणमन्तः फलतामृच्छन्ति. नखलु तपर्त्तौ पक्षिणो न गायन्ति; किन्तु वृक्षशाखादिषु निलीना एव तदा ध्वनिं कुर्वन्ति. अत्रैव कालेऽण्डानि विहगाः प्रसूय तेभ्यः शावकान् प्रादुर्भाव्य पुष्णन्ति. आङ्ग्लेयानां सुखावहः समयो हेमन्तः. तदानीं पुष्पलताः समृद्धपुष्पा भवन्ति. शालिकणिशानि च पचेलिमैः सुवर्णसवर्णैः फलैराचितानि लवित्वा धान्यं सञ्चिन्वन्ति कृषिकाः.

वर्षासु तरुषु कुसुमानि न वर्तेरन्; तद्वदेव शकुन्ताः. मृगाः खल्वपि भूतलक्लेदात् क्लिश्येरन्. भूमेर्दक्षिणोत्तरदेशेषु सरस्सु शीतवशाज्जलं शिलावद् घनीभवेत्. तत्र च बाला लोहमयं पादुकाविशेषं धृत्वा स्खलितप्रधावितं कुर्वन्तः क्रीडेयुः.



२७. कदली आम्रः तिन्त्रिणी वटः कार्पासः.

कदली चाम्रश्च फलदेषु तरुषु प्रशस्तौ. कद-

ली एष्याखण्डे आफ्रिकाखण्डे अमेरिकाखण्डे च प्र-
रोहति. उत्तमे कदलीप्रसव एकस्मिन् शतद्वयाधिका-
नि फलानि स्युः. अमेरिकाखण्डे केषुचिज्जनपदेषु
जना मोचाशलाटुभ्यः शोषितेभ्यः सक्तून् सम्पाद्य तैर-
पूपं श्राणां च राधयित्वोपयुञ्जते. मोचासमानः क्षिप्र-
फलो वृक्षो न विद्यते.

दक्षिणभारते चूतः स्तोकार्धतया कट्फलखदि-
रस्थाने प्रतिनिधीयते. चूतेन हि वलीकानि गोपान-
स्यः कवाटानि पेटिका अन्यानि चोपकरणानि नि-
र्मीयन्ते.

चिञ्चातरुरत्यन्तं सारवान्; यन्त्रनिर्माणे बहु-
लमुपयुज्यते. तत्फलेन व्यञ्जनं रसश्च निष्पाद्यते. ई-
तिसमये दरिद्रा जनास्तत्फलानि बहुधा पक्त्वा भक्ष-
यन्ति.

वटद्रुमः प्ररूढविततताभिः शाखाभिः, स्थूणोप-
माभिः शाखाधारिणीभिः शिफाभिश्च द्रुमान्तराण्यति-
शेते. केचिन्न्यग्रोधा अतिदूरप्रसृतेन शाखापरिणाहेन

बहुपरिवारस्य राज्ञो विश्रमणक्षमां विपुलां छायां वितरन्ति. अदृढावयवत्वाद्वटो गृहाङ्गदारुस्थाने नोपयुज्यते. तस्य क्षीरेण दन्तवेदना निवर्त्यते, कुररीग्रहणार्थो लेपश्च सम्पाद्यते. तस्य पत्राणि सन्धाय भोजनामत्रतां नीयन्ते.

कार्पासतूलतन्तुभिर्नानाप्रकाराणि वस्त्राणि क्रियन्ते. सिकतिले कृष्णमृत्तिके च स्थले कार्पासस्य कृषिः सम्यक् फलति. स च बल्लारि, कडप्पा, गोदावरि, मधुरा, तिरुनेल्वेलि, कोयम्बुत्तूर्, सेलं, इत्येतेषु मण्डलेषु भावितो बहुश इङ्गलाण्डदेशं प्रति प्रेष्यते. अमेरिकाफिरिकाखण्डयोरप्ययं प्ररूढो भवति. कार्पासस्तम्बात् फलोच्चयनसमय एव तूलस्तदावरणान्निष्कृष्योच्चेतव्यः. अन्यथा आवरणं खण्डशस्त्रुटित्वा तूले संलग्नं ततो विभक्तुं न पार्यते. अतोऽवकाशे पिचूनां मानं यथा सम्पद्येत, तथा तान् यन्त्रेऽर्पयित्वा समीकृत्य साधिततन्तुं तद्भारं महानावि समारोपयन्ति.

---

२८. देवदर्शिनौ.

द्वौ वैधेयौ देवं दिदृक्षमाणौ कञ्चिद् देवालयं गतौ. तत्रैको देवप्रतिकृतिमवलोक्य सहचरमाचचक्षे—'भ्रातः! शिला खल्वेषा दृश्यते. किमेनामीश्वर इति सर्वे व्यपदिशन्ति' इति. तद्वचनमालयपरिचारकाः श्रुत्वा देवोऽनेन 'शिले'ति निन्दित इति तं ताडयामासुः. ततो गते बहुतिथे काले स जातु तेन सहचरेण साकं कस्यचिद् मित्रस्य गृहे भुञ्जान आसाञ्चक्रे. तदा सहचरो जगाद—'धिगिदं भोजनम्; अन्ने शिला ह्युपलभ्यत' इति. प्रागनुभूतप्रहारः स तथावादिनं सहचरं मुखे चपेटया सद्यो दृढं प्रहृत्य 'अरे मूढ! किं त्वमीश्वरं शिलेत्यधिक्षिपसि? एवमुक्तवता मया पुरानुभूतो दण्डः किं त्वया विस्मृतः? अन्न ईश्वरशाबकोऽस्तीति ब्रूहि' इत्युवाच.

---

२९. विद्यायामुद्योगः.

विद्यायाः सिद्धिमिच्छता निरन्तरमभ्यासः क-

र्तव्यः. तत्र कदाचिद् व्यग्रतामवलम्ब्य कदाचिदालस्यपरिग्रहेण कञ्चित्कालं विषयमेकमभ्यस्य तं विहाय कञ्चित्कालं विषयान्तरस्य परिशीलनेन च न किञ्चित् प्रयोजनं स्यात्. अतिमन्दोऽपि कश्चित् 'पिपीलिकासर्पणाच्छिलापि निम्नीभवेद्' इति लोकवादानुसारेण यदि प्रसन्नचित्तः प्रत्यहमल्पशोऽपि वा श्रद्धयाधीयीत, कथमपि स पण्डितो भवेदेव. यस्त्वात्मानं बुद्धिशालिनं मन्यमानः कदाचिदेवाधीते, नासौ सिद्धिं प्राप्नोति. अत्रोदाहरणं शशकूर्मीया काचन कथास्ति. कश्चित् कूर्मः केनापि शशेन साकं 'पश्यावस्तावत् सखे! इतः प्रदेशात् समं प्रचलितयोरावयोः कतरः प्रथममसुकं स्थानं प्राप्य पुनरिमं प्रदेशं प्राप्नोति' इति ग्लहं परिपणितवान्. प्रस्थितयोस्तयोः पूर्वं शशकः सवेगं प्रधावितः पृष्ठतोऽतिदूरे शनैरागच्छन्तं कमठं वीक्ष्य 'क्षणमत्र विश्रमिष्यामि; कमठेऽभ्यर्णमागते पुनर्विद्रोष्यामि' इति विचिन्त्य मार्गतरुच्छायायां क्षणं विश्रान्तः. तथैव पथि धावनविश्रमौ पुनःपुनराचरन् क्वचन वि-

श्रमपर्याये गाढं स सुप्तोऽभवत्. कच्छपस्त्वविच्छिन्नं चलन्नुद्दिष्टं स्थलं प्राप्य शशस्य प्रबोधात् प्राक् प्रस्थानदेशं प्रत्यागतो ग्लहं निर्जिगाय. तस्माज्जयः सर्वदा वेगवतामेवेति वा बलवतामेवेति वा न मन्तव्यम्.



### ३०. अन्धानां गजदर्शनम्.

अन्धाः कतिपये समेताः क्वचिदागत्योपविष्टाः. तत्र केषाञ्चिन्निषादिना सह सम्भाषणं श्रुत्वा 'गजः कीदृग्' इति जिज्ञासमाना गजस्य स्वान्तिकानयनायाधोरणं प्रार्थयन्त. यथाप्रार्थनं च कृतवति हस्तिपक उत्थितेषु च प्रज्ञाचक्षुःष्वेकः कुम्भिनः पादमन्यः करमपरः कर्णं परः पुच्छं च गृहीत्वा सम्यगभिममृशुः. अथ ते गजो ज्ञात इति परितुष्टाः स्वीयं स्थानं पुनरागताः स्वं स्वं गजदर्शनं वर्णयितुमारेभिरे. तत्र पादाभिमर्शी गजमुलूखलाकारमवदत्, करस्पर्शी मुसलाकृतिं, कर्णग्राही शूर्पसन्निवेशं, पुच्छलग्नश्च मार्जनीसरूपम्. एवं ते स्वस्वविज्ञानमेव भङ्गिभेदैः स्थापयन्त

आप्तवाक्यान्यप्रमाणयन्तो विप्रलापेनैव कृत्स्नमायुरतिवाहयामासुः. एतेन—

मूर्खो विमृश्यवाच्येऽर्थे क्वापि पक्षे दुरास्थया ।
स्वपक्षवादानिर्बन्धं विजहाति न जातुचित् ॥

इतीयं नीतिः स्फुटा भवति.

---

## ३१. सर्वानुरोधोद्यमः.

एकः स्थविरः सपुत्रो ग्राम्यं कञ्चिदश्वकिशोरं विक्रेतुं पण्यवीथीं गमयन् प्रचलितः. तं वीक्ष्य पथिकः कोऽप्यभाषत—'बुद्धिरिक्तः खल्वयं वृद्धः, योऽश्वं निर्भारं गमयन् बालं पुत्रं पादचारेण क्लेशयति' इति. श्रुततद्वाक्यः पिता तनयं वाजिपृष्ठे समारोप्य स्वयं तत्पार्श्वलग्नश्चचाल. ततः स यावत् स्तोकमन्तरं न लङ्घितवान्, तावदपरस्य मार्गगामिनो 'रे बालक! दुर्बुद्धे! इयज्जराक्रान्ते वृद्धे पद्भ्यां सञ्चरमाणे कथं त्वमश्वारूढो यासि' इति पुत्रं प्रत्याक्रोशं श्रुत्वा पुत्रमवरोप्य स्वयमश्वमारुह्य किञ्चिद्दूरमतीयाय. ततोऽन्यः

समागम्य 'अहो साधु साधु, पश्यत, निष्करुण एष दशमी स्वयं हयस्य पृष्ठे सुखासीनो बालकं पद्भ्यां चारयति' इत्युच्चैर्जुघोष. वाचानया व्यथितमनाः पिता पुत्रमप्यश्वपृष्ठे समारोप्य चचार. ततः कतिपयपदगमनात् प्राक् चतुर्थः कश्चिदभिगम्य कथितवान्—'नराणामनुचितमेतन्नृशंसं कर्म, यदेकस्य बालस्याश्वस्य पृष्ठे बलिनौ द्वौ पुरुषावासाते. अनयोर्भरेण ह्यश्वस्य पृष्ठास्थि भज्येत. वरमाभ्यामश्वो यद्युह्येत. न त्वश्वेनानयोर्वहनं युक्तम्' इति. तत उपजातलज्जौ पितापुत्रावश्वादवतेरतुः; तस्य च पादान् रज्ज्वा संश्लिष्टबद्धान् कृत्वा तदन्तराले मुसलमेकं प्रवेश्य पुरः पश्चाच्च तदग्रे स्कन्धेनोहतुः. यावच्च तथा तौ कस्यापि संक्रमस्योपरि गच्छतः, तावत् सहस्ततालकलकलं तदीयं वामकर्मावहसन्तः पुरोभागिनः केचित् संभूय तावनुजग्मुः. क्षुभितश्च तेनाश्वो मुहुरारब्धेन पादविधूननेन च्छिन्नचरणरज्जुर्मुसलात् प्रच्युत्य लोठंलोठं नद्यां भ्रष्टो निममज्ज. 'अहोबत लोकस्य भिन्नरुचितां विस्मृ-

त्य सर्वजनप्रीणनाय कृतैर्यत्नैर्मया नैकोऽपि जनः प्रीणितः, अश्वश्चैवं मदीयो नष्ट' इति प्रलपन् गृहं स स्थविरः प्रतिजगाम.

३२. सामान्यनीतिः.

शुभं वा यदिवा पापं द्वेष्यं वा यदिवा प्रियम् ।
अपृष्टस्तस्य तद् ब्रूयाद्यस्य नेच्छेत् पराभवम् ॥ १ ॥
मिथ्योपेतानि कर्माणि सिद्धिमन्त्यपि वर्जयेत् ।
सदुपायानि कर्माणि कुर्वीतासिद्धिमन्त्यपि ॥ २ ॥
यत्तावद् ग्रसितुं शक्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत् तदाद्यं भूतिमिच्छता ॥ ३ ॥
किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो नवा ॥ ४ ॥
ऋजुः पश्यति यः सर्वं चक्षुषा प्रपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं जनाः ॥ ५ ॥
न वृद्धिर्बहुमन्तव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहुमन्तव्यो यः क्षयो वृद्धिमावहेत् । ॥६॥

गाढं गुणवती विद्या न मुदे विनयं विना ।
महत्सु विनयोपेता मूर्खतापि मुदे भवेत् ॥ ७ ॥

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ८ ॥

समाहृतगुणस्यापि साधुर्नाप्नोति तुल्यताम् ।
सच्छिद्रस्य मृणालस्य चापस्य कुटिलस्य च ॥ ९ ॥

ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।
अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥ १० ॥

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ११ ॥

नियतैः पदैर्निषेव्यं स्खलितेऽनर्थावहं समाश्रयाति ।
सम्भवदन्यगतिः कः सङ्क्रमकाष्ठं दुरीशं च ॥ १२ ॥

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमुपैति पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ १३ ॥

भुज- विना गोरसं को रसो भोजनानां
प्रयात विना गोरसं को रसो भूपतीनाम् ।
विना गोरसं को रसः कामिनीनां
विना गोरसं को रसः पण्डितानाम् ॥ १४ ॥

---

### ३२. चक्षुः.

अस्माकं नयनं गवाक्षसममिति, तद्द्वारेणात्मा बाह्यं दृश्यजातं पश्यतीति चोक्तमधस्तात्. आकृतावल्पमपि चक्षुरतिमहान्ति द्रव्याणि गृह्णाति. यथा पटे मूर्तिराक्रियते, तथा पुरः स्थितः पदार्थो दृश्याख्ये सर्वान्तरे धवलसिराजाल आक्रियमाणः साक्षात्कृतो भवति. चक्षुराधारस्यास्थिगोलस्य रक्षायै धनुराकृतिर्भ्रूरुपरि सन्निवेशिता. भ्रूलोमानि क्रमप्रवणतया ललाटस्वेदजलं यथा दृष्टिं न प्रविशेत्, तथा नेत्रान्तोपान्ततस्तद् दूरीकुर्वन्ति. पक्ष्मणी च नयनस्य कवचतां प्रतिपद्योद्वेगजनकस्य प्रकाशस्यात्याक्रमणं परिहरती सुषुप्तौ रक्षितुमस्मास्वशक्तेषु जातेषु दृशं

रक्षतः. अपिच ते दृशं प्रविष्टानि रजांस्येकत्रोपसमाधातुमान्तरजलेन चक्षुरुपर्यावरणं निस्संशोषमार्द्रयितुं च पुनःपुनर्निमिषतः. यूरोपेऽमेरिकायां च स्पर्शवेदनविषयान्धैर्वाचयितुं यथा शक्येरन्, तथाक्षराण्युत्थास्नूनि पत्रे सन्निवेश्य पुस्तकं सज्जीक्रियते.

परमकारुणिको भगवान् एकस्येन्द्रियस्योपघात इन्द्रियान्तरे पाटवातिशयमादधाति; अन्धानां हि श्रोत्रेन्द्रियं त्वगिन्द्रियं चातिसूक्ष्मे; बधिरस्य तु चक्षुरिन्द्रियं तथा. एवं जनस्य तत्तद्गुणवैकल्येऽन्यान्यगुणपौष्कल्यं दृश्यते.

## ३४. निमित्तम्.

पाटलिपुत्राभिधाने क्वचिन्नगरे राजा कश्चिदासीत्. स जातु प्रातः प्रबुध्य जालमार्गेण मुखं प्रसार्य बहिर्दत्तदृष्टिः कश्चिदापणावपतितानां भक्ष्यशकलानामुच्चयने व्यग्रं शूद्रकुमारकमपश्यत्. पुनर्जालाद् मुखं प्रतिसंहरतस्तस्य जालद्वारोपरिदारुणः संघट्टनेन

व्रणिताद् मूर्ध्नो रक्तं बहु जगाल. ततः क्रुद्धो राजा 'अद्य प्रातरस्य दुर्भगस्य मुखे प्रथमदृष्टिपातादेव रक्तदर्शनरूपमिदममङ्गलं मे जातम्. एवमन्येषामप्यनर्थो जायेत. अतः शूद्रकुमारकस्यास्य शिरश्छिद्यताम्' इत्यादिदेश. ततो वधाधिकृताः 'त्वन्मुखदर्शनाद्राज्ञः शिरसि क्षतं जातमिति त्वच्छीर्षच्छेदादेशस्तेन विहितः. तस्मादेहि वध्यस्थानम्' इति तं कुमारमाचकृषुः. स तान् प्रार्थयत—'प्रसीदन्तु भवन्तो वधात् प्राङ् मां राजान्तिकं प्रापयितुम्; वाक्यमेकं तस्याग्रे वक्तव्यमस्ति' इति. तथेति तैर्नृपाग्रे नीतश्च स तमन्वयुङ्क्त—'महाराज! प्रातर्मन्मुखदर्शनेन देवस्य देहात् किञ्चिद्रक्तमात्रमपेतम्. मम तु देवमुखदर्शनेन शीर्षच्छेदान्ता खलु विपदुपनता. तत्र न्याय्यं कतमं देवो निर्णयमुत्पश्यति' इति. तच्छ्रुत्वा व्रीडितो राजा तं विसर्जयितुमाज्ञप्तवान्.

सुप्तोत्थितस्य प्रथमं काकयुग्मावलोकनं तस्मिन् दिने शुभावहमिति केनापि निमित्तवेदिना

कश्चिदुपादिष्टः स्वस्य किङ्करं 'प्रातर्द्वौ वायसौ सहावस्थितावुपलभ्य सद्यो मां प्रबोधय' इत्यादिश्य रात्रौ सुष्वाप. ततः प्रभाते किङ्करस्तथाभूतौ बलिभुजौ पश्यंस्त्वरिततरं स्वामिनं प्रबोधयामास. किन्त्वागतस्य स्वामिनो दृष्टिपातात् प्रागेव तयोरन्यतर उड्डीय गतः. स्वामिना तु 'रे मूढ! अन्यतरोड्डयनात् पूर्वमेव मां किमिति नाहूतवानासि' इति साधिक्षेपं ताड्यमानो भृत्योऽब्रवीत्—'मिलितं काकद्वयं दृष्टवता मया तावदिदमिदानीं फलमनुभूतम्. नखलु जाने स्वामी चेत् तदद्रक्ष्यत्, कीदृशं फलमन्वभविष्यत' इति. अथ भर्ता प्रत्युत्तरमप्रतिपद्यमानस्तूष्णीं गृहाभ्यन्तरं विवेश.



३५. क्षमा. (क)

राधिका नाम कापि योषिदतिशैशवे मातापितृवियोगं प्राप्ता पितृष्वसुर्मालावत्या गृहे समवर्धत. अतिबालिकायास्तस्याः पोषणमुपक्रमे मालावत्याः कृच्छ्र-

साध्यमासीत्. किन्तु राधिका विसोढसर्वकृच्छ्रा पितृष्वसारमनतिवर्तमाना तत्प्रियाण्याचचार. सा निसर्गाद् बालिकासाधारणं चापलं विहायोपजातविद्याभ्यासतर्षा बालानामधीतविषयकस्य संभाषणस्य श्रवण आत्मनोऽध्ययनप्रतिबन्धिकां नियतिं ध्यायंध्यायं दूयेत. तथापि वृथाकालक्षेपमसहमाना औपवेशिकस्य कृषीवलस्य गृहपारिसरप्रदेशे शिलाशकलोच्चयने तदीयानामजानां कालनायामन्येषां तन्निदेशानामनुष्ठाने च सा यथाकालं व्याप्रियेत. निर्वृत्ते च व्यापारे गृहमासाद्य गृहसम्मार्जन-पात्रशोधन-अन्नपाकादिकेषु गृहकर्मसु मालावत्याः सहकृत्वरी स्यात्.

एवं गच्छति काले दिवाकृतकर्मणां बालानां दिनान्तेऽध्ययनानुकूलः कश्चित् धर्मपाठालयस्तद्ग्रामे भाग्यवशादुपकल्पितो जातः. तत्रात्मनः प्रवेशनं राधिका पितृष्वसारमयाचत. स्वसंवर्धितायास्तस्याः कृतकपुत्र्या यत्किमपि श्रेयो विधातुं चिरेणावसरं प्रतीक्षमाणा च सा तामभिनन्द्य प्रीतिपूर्वं पाठालये प्रवे-

शयामास. प्रविष्टायाश्च तस्याः श्रद्धोपस्कृतबुद्धेरुत्तारे नातिदीर्घः कालोऽपेक्षितोऽभवत्. सा हि पुस्तकक्रयणाशक्ता याचितकं पुस्तकमुपाध्यायाल्लब्ध्वा क्षणेक्षणे पठन्ती कञ्चित् कालमवर्तत. ततः क्रमेण लिपिलेखनपाटवे जज्ञन्यमाने स्वहस्तेन पाठान् विलिख्याधीयाना स्वल्पेनानेहसा पुस्तकानां धारावाचनायां हस्ताक्षराणां सम्यङ् न्यसने च प्रवीणा बभूव.

३६. क्षमा. (ख)

एवं वर्तमानाया राधिकायाः प्राप्ते द्वादशे वयसि काचिद्विपत्तिरुपननाम. सा हि क्वचिद्दिने नद्या जलमादायागच्छन्ती पथि पश्चात् शकटस्य सरभसोपसरणध्वनिं श्रुत्वा विवृत्य दत्तदृष्टिः शकटे युक्तौ वित्रासजनितक्षोभतया जवेन मार्गाद् बहिः स्वपन्तं कञ्चित् बालकमभिद्रवन्तौ महोक्षौ पश्यन्ती झटिति जलकुम्भमवतार्य बालं ग्रहीतुं वेगाद्ययौ. अत्र चान्तरे गोभ्यां शृङ्गेणाभिहत्य पातितायास्तस्याः पादौ

शकटमाक्रम्य व्यारुरोज. दृष्ट्वा च तं व्यतिकरं सम्भ्रान्ता मार्गचारिणः सहसोपसृत्य तामुद्दध्रुः; परन्त्वितिकर्तव्यतां ते नावेदिषुः. ततः कोऽपि भिषगागत्य तस्याः पादौ परीक्ष्य पादमेकं भग्नमवदत्, अन्यं तु बलवत् क्षतम्. तेन व्याधिना चिरं पीडिता राधिका क्रमेणोपशान्तायां वेदनायां विरोपिते च व्रण आत्मनोऽपरिहार्यया पङ्गुतयोपनतां पितृष्वसुरन्यस्य वा जनस्य शुश्रूषेण शक्तिहानिं भृशमनुशुशोच. तथापि सा पङ्गुताव्याजेन शुश्रूषाकर्म न सर्वथा त्यक्तवती.

उपचिकीर्षवो हि स्वभावादावृते द्वार एकस्मिन्नुपकारस्य द्वारान्तरमवश्यमुपलभन्ते. सा खलु सीवनशिल्पं, बाललालनां, रोगिवृद्धादिभिः सहावस्थानं, हृद्यपुस्तकवाचनया तेषां विनोदनं, अन्यञ्चैवम्प्रायं व्यापारं प्रतिदिनमनुतिष्ठन्ती देहयात्रापेक्षितं धनमपि किञ्चित् तेन लभमाना स्थिता. ततोऽल्पेन कालेन तस्या अवदाते चरिते ततइतो जनैरभिनन्द्यमानेऽभ्यर्णग्रामाभिजनः कृषीवलः स्वपुत्रेण तामुद्वाहयांबभूव.

भर्त्रा च साकं गृहसौख्यानि सा निर्विशन्ती जरढां पितृष्वसारमविस्मृततत्कृतोपकारा यावज्जीवमन्नवस्त्रादिदानेन ररक्ष.

---

## ३७. मातृभक्तिः.

पुरा यूरोपखण्डे प्रकृत्या व्यतिक्रमासहनः कश्चिद्राजा बभूव. स आत्महूतिप्रतीक्षणार्थं कञ्चिद् भृत्यं स्ववासगृहसंश्लिष्टे कोष्ठे 'सततमप्रमत्तः सन्निधेहि' इति नियुक्तवान्. क्वचिद् दिने स तं बहुकृत्व आह्वयन्नपि तस्य प्रतिहूतिमशृण्वंस्तत्र कारणं जिज्ञासुर्बहिर्निर्गत्य परिश्रान्तसुप्तं च तमुपलभ्य प्रबोधयितुं तदन्तिकमुपससार. तदानीं तत्कञ्चुककोशे अग्रमात्रदृश्यं कमपि लेखं पश्यन् कौतुकात् तल्लेखार्थमवगन्तुमिच्छुस्तं कोशादाकृष्यावाचयत्. लेखस्तु तस्य जनन्या प्रहितः. तत्र च, स्ववेतनात् कृच्छ्रेण शेषितस्य द्रव्यांशस्यात्मने प्रेषणं, अपाटवदशायां प्रीतिपूर्वमात्मनो रक्षणं च पुत्रेण क्रियमाणं प्रत्यभिनन्दनवाक्यमुपन्यस्य मात्रा प्रयुक्तं 'पुत्रक! ईशस्त्वामनु-

गृह्णातु' इत्याशीर्वचनं लिखितमासीत्. ततो राजा निभृतं स्ववासगृहं प्रत्यागत्य रूप्यप्रतिनिधिपत्राणि कानिचिदादाय पुनरुपसृत्य तेन लेखेन साकं भृत्यस्य कञ्चुकपेश्यां निवेश्य स्वं स्थानं पुनः प्रतिपन्नस्तमुच्चैः-कारमाजुहाव. भृत्यश्च झटिति प्रबुध्य सम्भ्रमात् प्रभोरन्तिकं प्रधावित उपासरत्. 'न खलु त्वं गाढं सुप्तोऽभवः' इति सतर्जनं राज्ञो वचनं श्रुत्वा भीतस्य ततइतः स्खलतस्तस्य पाणिर्यदृच्छया कञ्चुकपेशीं विवेश. अपूर्वमिव पत्रजातं तदन्तर्वर्तमानं स्पर्शेन शङ्कमानस्तदाकृष्य विलोकयन्ननात्मीयं रूप्यप्रतिनिधिपत्रजातं विज्ञाय सन्त्रस्तः सगद्गदं रोदितुमारेभे. तं राजा 'अरे किं त्वमुन्मत्तोऽसि ? किमित्यकाण्डे रोदिषि' इत्यपृच्छत्. किङ्करस्तस्य पादयोः पतित्वा 'देव ! नूनं यः कोऽपि मामनर्थेन योजयितुं समीहते. न खल्वहमवगच्छामि रूप्यप्रतिनिधिपत्रबृन्दमेतत् केन मत्कञ्चुकपेश्यां निवेशितम्' इति परिदेवितवान्. राजा तु तं स्मित्वोवाच—'भद्र ! मा तावद् भैषीः;

निद्रासमयेष्वीश्वरेणास्माकमनुग्रहः क्रियमाणो लोके दृश्यते; सोऽयमनेन प्रकारेण त्वयि मन्ये सम्पन्नः; तदेतद् द्रव्यं मात्रे त्वमुपहर; "तां त्वां च नाहं जातुचिदुपेक्षेय" इति मत्प्रतिश्रवं च त्वज्जननीं ग्राहय' इति.



## ३८. हिंसारसः.

कतिपये माणवकाः क्रीडाकौतुकिनः सरस्तीरे संभूय शिलाशकलानि जलोपरि मण्डूकवत् सारयन्तः स्थिताः. तत्रस्था भेकाः शिलाशकलेभ्यस्त्राणमिच्छवस्ततइतो निमज्ज्य निलेतुमारभन्त. किन्तु शिलाखण्डेष्वसकृत् सन्तत्या पतत्सु दर्दुराः केचिद् मृताः केचिच्च क्षताङ्गा जाताः. तेषु धीरः कश्चिज्जलोपरि प्रसारितशिराः 'प्रियाः! बालकाः! किमिति यूयमियति बाल्ये नृशंसं कर्म परिशीलयथ. एषा हि शिलाशकलस्य प्रेरणक्रीडा यद्यपि युष्माकमानन्दहेतुः,

तथापि नोऽत्याहितं खलूत्पादयति. अन्याय्यः खल्वयं व आचार' इत्युवाच. तस्मात् क्रीडापि पराहिंसयैव कार्या.



### ३९. अकृतज्ञोऽधमर्णः.

कोऽपि धनी द्वित्रवर्षेभ्यः पूर्वं गृहीतस्य ऋणस्य प्रत्यर्पणमधमर्णमयाचत. ऋणग्रहणमपलपत्यधमर्णे मिथस्तौ कलहायमानौ सनीडग्रामस्थायां न्यायसभायामभियोगं कर्तुं प्रस्थितौ. मध्येमार्गमधमर्णः प्रियवचनैरपरमुपप्रलोभ्य सप्रश्रयं 'भोः स्वामिन्! क्व तदृणप्रमाणलेख्यं? प्रसीद मे ऋणग्रहणकालं जिज्ञासमानाय तद्दर्शयितुम्' इति प्रार्थितवान्. उत्तमर्णेन साधुना 'तदिदमस्ती'ति परिधानान्तरालादुद्धृत्य प्रतिपादितं तल्लेख्यं वाचनमिषेण निध्यायन् लवशश्छित्वाभ्यर्णकूपे चिक्षेप. सद्यस्तमुत्तमर्णः परिधाने गृहीत्वाकर्षन् प्राड्विवाकमुपगम्य वृत्तमशेषं निवेदयामास. किं त्वं लेख्यमच्छिदः' इति प्राड्विवाकेन पृष्टः

सोऽभाषत—'नाहमस्माद्दृणमग्रहीषं, न वा प्रमाण-लेख्यमच्छैत्सम्' इति. न्यायाधिपतिर्धनिकं 'गच्छ, आनय लेख्यस्य शकलानि, यदि तस्यान्धोरुपकण्ठे कीर्णान्युपलभ्येरन्' इत्युक्त्वा विससर्ज; प्रकृतस्मृति-विच्छेदनाय चाधमर्णेन साकं हृदयग्राहीणि तानितानि लोकवृत्तानि कांश्चिन्मुहूर्त्तान् प्रस्तुवानस्तमाकारैर्वि-स्मृतात्मानमवधार्य पप्रच्छ—'अपि नामेयता सम-येन स धनिकस्तं प्रदेशमुपगतो भवेद्? इति. 'स्वा-मिन्! नखलूपगतो भवेत्; अतिदूरो ह्यसौ प्रदेशः' इति झगित्युत्तरमृणी ववाम. व्यवहारनिर्णेता तु 'एवं खलु मूर्ख! सत्यमुद्गीर्णवानसि' इत्युक्त्वा तं दण्ड-यित्वा च ऋणमखिलमुत्तमर्णाय प्रत्यर्पयामास.

ऋणस्य ग्रहणमेव तावदनुचितम्. यदाहुः—

'लोकद्वयप्रतिभयैकनिदानमेतद्
धिक् प्राणिनामृणमहो परिणामघोरम्।
एकः स एव हि पुमान् परमस्ति लोके
ऋद्धस्य येन धनिकस्य मुखं न दृष्टम्'॥इति.

गृहीते तस्मिन्नुत्तमर्णातिसन्धाने प्रयतनमनार्यमस्वर्ग्यं च. पूर्वं वङ्गदेशभर्तृपदे स्थितः मार्क्किस-वेल्लसलिनामा ऋणनिर्यातनविषये प्रख्यात उत्तमः पुमानासीत्. स हि स्वपितुः ऋणार्णवमग्नस्य प्रमीतस्य ऋणं तदपाकरणे धर्मशास्त्रेणाप्रतिबद्धोऽपि कृच्छ्रेण निरवशेषं विशोधयामास.



## ४०. कुटुम्बैकपत्यम्.

कस्यचित् स्थविरस्य चत्वारस्तनया आसन्. ते पितुर्हितोपदेशान् प्रत्यादिश्य नित्यं मिथः कलहायमाना अवर्तन्त. कचन दिने तानानाय्य प्रतनुकाष्ठानां पूलमेकं संहतबद्धमग्रे निवेश्य 'इदं भङ्ग्धि' इति ज्येष्ठमादिदेश. स तु तद् भङ्क्तुं कथमपि नाशक्नोत्. एवमन्यैरपि प्रत्येकमादिष्टैस्तद् भङ्क्तुं नापारि. ततः पित्रा 'संभूयापि वा तद्भञ्जनं कुरुध्वम्' इति चोदितास्ते समस्ता अपि कर्त्तुं न शेकुः. ततस्तेन बन्धं विस्रंस्य 'एकैकेनैकशः काष्ठानि भज्यन्ताम्'

इत्युक्त्वा हेलयैव ते तानि सर्वाण्यभाङ्क्षुः. तदा पिता तानवदत्—'पुत्रकाः! इदं तावद्युष्माभिरवधातव्यं—यत् कृशान्येतानि काष्ठानि सङ्घातदशायां भङ्क्तुमशक्यानि दृष्टानि, विश्लिष्टमात्राणि तु सुखतरभञ्जनीयानि जातानि. एवमेव मिथः संभिन्नानां युष्माकं महद् बलं भवेत्, येन परेषामधृष्या भवेत. अमर्षवशा मिथो भिन्नास्तु यूयं सद्यः शत्रोरामिषीभूता नश्येत' इति. अनया पितृप्रदर्शितया निदर्शनया परमां मतिमुपगताः परस्परविरोधपरिहारेण ते सौभ्रात्रमविन्दन्त. एकोदरजातानामन्योन्यविरोधो मानहानये केवलं कल्पते.

---

### ४१. मातापितृवाक्यलङ्घनम्.

गृहे निक्षिप्तभक्ष्यस्य कुड्यगह्वरस्य सविधे क्वचिल्लतावलये सार्भका कापि मूषिकोवास. तस्या डिम्भः प्रतिनिशं ततइतः सोल्लासं विहरणसुखमनुभवन् कचिद्दिने बहिर्विहृत्य प्रहृष्टमना मातृसविधं प्रत्यायातः

'मातः! मिथ्या ह्येतत्, यत् केचिदाहुः—मानुषा अस्मभ्यं द्रुह्यन्तीति. न खलु श्रुतमात्रे सर्वस्मिन्नर्थे विश्वासः कार्यः. एतद्गृहवासिनो हि नरा महता प्रयासेनास्मदर्थे किमपि गृहं निर्मितवन्तः. तत् समन्ताद् भित्तिभिरावृतं विपुलं दृश्यते. तत् प्रविष्टानस्मान् सपरिवारा बहवोऽपि पृषदंशकाः सन्नह्यन्तो ग्रहीतुं न शक्नुयुः. अपिच तत्रास्माकं प्रवेशनिर्गमयोरनुगुणं द्वारमस्ति. खरस्पर्शेषु लतावलयेषु प्रविशतां नः सुलभः पार्श्वसंघर्षः; इह तु न तादृशं दुःखं भवेत्. किञ्च नवामोदमेदुराणि हृदयग्राहीणि भक्ष्याणि चान्तर्वर्त्तन्ते' इत्युक्त्वा 'अम्ब! यद्यनुमन्यसे तस्माद् भक्ष्यात् कमप्यंशं तवाहरिष्यामि' इत्युवाच.

माता तत्त्वाभिज्ञा पुत्रमाह स्म—'वत्स! श्रद्धेहि मद्वचनं; तद् भित्तिगर्भगृहमस्मद्ग्रहणाय कल्पितं किमपि साधनमवेहि; अस्मान् प्रलोभ्य मारयितुं तत्र भक्ष्यं निवेशितम्; सति सौकर्येऽस्मज्जातिमशेषां नरा नाशयेयुः. न खलु जाने, तथाविधं गृहं

प्रविष्ट एकोऽप्युन्दुरुर्जीवन् प्रत्यायात इति; तज्जागृहि प्रिय! पुत्रक! मास्म तदन्तिकं गमः' इति. तत् श्रुत्वा स शावको 'नयनपाटवाभावाद् गृहे तत्राश्वासं न करोति जरती मे माता. तत्र लेशतोऽपि विप्रलम्भशङ्काया नावकाश इत्युपजातनिश्चयः 'अहं तद्गृहं प्रविश्य भक्ष्यस्य कबलमेकं संदश्य जनन्या उपहरिष्याम्येव; सा च भक्षयिष्यत्येव' इति विचिन्त्य सुप्तप्रशान्ते वेश्मनि निभृतं तद्गृहं प्रविश्य लालसया भक्ष्यं दंष्टुमारेभे. ततस्तदुत्पन्नं किलकिलारवं श्रुत्वा भीतो झगिति स प्रवेशमार्गेण निर्गन्तुमधावत्; छादिते च तस्मिन् मार्गेऽन्तर्बम्भ्रम्यमाणोऽपि निर्गमद्वारं नोपलब्धवान्. प्रातस्तद्गृहकपाट उद्घाट्यमाने बहिर्धावने प्रवृत्तमात्रं तं गृहपालकाः श्वानो गृहीत्वा सन्दश्य लवशः खण्डयामासुः.

---

४२. व्यायामः.

भारतखण्डे दरिद्रा जना अतिमात्रमायासं कुर्वन्ति. धनिनस्त्वावश्यकमप्यायासं न कुर्वन्ति. आ-

न्तरीपकाः प्रतिदिनमारोग्यार्थं पद्भ्यां वा अश्वमारुह्य वा ततइतो नियमेन परिक्रामन्ति. भारताभिजनो धनिकः पुनर्नियमेन गृह एव तिष्ठति, न च गृहान्निस्सरति कार्यान्तरनिर्बन्धाभावे. तदेतदयुक्तमहितं च. पुंसा नामोचितव्यायामशालिना भाव्यम्. महत् खलु प्रयोजनं व्यायामेन सिध्यति. अस्मद्देहे हि चलनहेतुभूता मांसप्रचुरा भागा वस्नसा नाम मांसपेश्यः सन्ति. ता यथोचितमुपयुज्यमानाः प्रवृद्धा बलवत्यश्च स्युः, अन्यथा कृशा दुर्बलाश्च.

अस्माकं निर्व्यापारस्थितावनुकुलं प्रायः षोडशकृत्वो निश्वसिमः. धावनसमये तु ततस्त्वरिततरं निश्वसिमः, अधिकतरं च नवं वायुमन्तरङ्गीकुर्मः. तद्वशाच्च रक्तं सम्यग्विशुद्धं भवति. हृदयस्यापि तदानीं त्वरिततरव्यापारितया सर्वेषु देहभागेषु रक्तमधिकतरं प्रसरति.

अयमपरो गुणो व्यायामे, यद्वयं शीघ्रसञ्चारे बलवत्कर्मानुष्ठाने वा स्विद्यद्देहा भवामः. स्वेदसलिलं

ह्येतद्देहान्तर्भागाद् त्वग्द्वारेण दुष्टांशान् निस्सारयत् तमारोग्यसम्पन्नं करोति. किञ्च व्यायामवानधिकमभ्यवहारं ग्रहीतुं शक्नोति. गृहीतश्च स सुखं जीर्यति.

उचितव्यायामशालिनो जना बलसमृद्धसर्वावयवा भवन्ति. व्यायामहीनास्तु अलसभावमापन्ना निरुद्योगा भूत्वात्मनः परेषां वा नोपकारमाधातुं प्रभवन्ति.

बालाः स्वभावात क्रीडाकौतुकिनो भवन्ति. सा तेषामनुकूला. धावनकन्दुकप्रेरणादिरूपा हि क्रीडा तेषां पादयोर्बाह्वोश्च बलमावहति. किं बहुना; कलकलेनापि हसितेनापि तेषामारोग्यं वर्धते, यतस्ताभ्यां तत्तदवयवा व्यापारिता भवन्ति.

किन्तु व्यायामो हित इत्येतावता न बालैः पाठमुपेक्ष्य क्रीडैकतानैर्भवितव्यम्, न वा पाठपरिपन्थिनी क्रीडेति कृत्वा व्यायामोऽत्यन्तमूनयितव्यः. यत् पुनः प्रायः केषुचित् पाठालयेषु बाला आनस-

भेदपरिग्रहं विनैकत्र चिरमवरुध्यन्ते, तदसाम्प्रतम्.

सकलकलाशालासंबन्धिन्याः परीक्षायाः कृते बलवत् परिश्राम्यन्तो व्यायामाभावात् पीडामनुभवन्ति बालाः. तेषु केचिदध्ययन एव केवले कृत्स्नः कालः पर्युपयोक्तव्य इति मन्यन्ते. तथाकरणे महाननर्थो जायेत. अवसरेषु कारुणा स्वोपकरणमिव जनेन बुद्धिरुत्तेजनीया. सा हि मस्तिष्कद्वारेण व्याप्रियते. मस्तिष्कं च व्यायामेन संविहितप्राज्यरक्तसम्भारमूर्जस्वलं च भवति. ये पुनरध्ययनातिगर्धेन व्यायाममुपेक्षन्ते, ते तथा रोगवन्तो भवन्ति, यथाभीप्सितपरीक्षाप्रवेशे शक्तिहीनाः स्युः. एवं तावत् केचित् स्वयं रोगमुत्पाद्य यावज्जीवं तेन पीड्यन्ते.

दिनान्ते गुलिकया कन्दुकेन वा क्रीडनं हितहेतुर्भवति. बालिकानां नर्तनप्लुत्यादिकं प्रशस्तम्.

स चायं सर्वजनीनोऽपि क्षुत्समये पूर्णाभ्यवहारग्रहणोत्तरकाले वा न कार्यः.



### ४३. विकत्थनः कुमारः.

कश्चिद् महावणिक् वाणिज्ये विनष्टसर्वद्रव्यः कुग्रामं कञ्चित् प्राप्य भार्याधनेन स्वल्पेन कृच्छ्रात् कालयापनं कुर्वन्नासाञ्चक्रे. तदा तस्मै सुहृत् कश्चिद् वणिक् 'तव प्रशान्ते ऋणापकरणव्यतिकरे, त्वां मदीये वाणिज्येंऽशिनं कल्पयिष्यामि' इति प्रतिश्रुतवानासीत्. तस्य कुमारेण नगरे भूरिवित्तव्ययोपास्ये प्रशस्ते पाठालये पठता तत्रत्यैः सबहुमानमुपलाल्यमानेन पितृर्दुर्गतिवशादध्ययनमपहाय पितृपार्श्वं गन्तव्यमभवत्. गच्छंश्च स मार्गसङ्गतानां केषाञ्चिदग्रे स्वपितुर्भाग्यभ्रंशस्य प्रकाशने लज्जितः 'पितुरन्तिके नानाभोगाननुभवितुं गच्छामि' इति विकत्थते स्म. तत्पितुरुत्तमर्णसम्बन्धिनस्ते तस्य तथाविधां वाचं निशम्य 'तत्पिता नूनमस्मान् वञ्चितवान्' इति मन्यमानास्तत्कदर्थनायां मतिं चक्रुः; वाणिज्यांशदानप्रातिज्ञात्रे तत्सुहृदे च पुत्रविकत्थनां निवेदयामासुः. तदिदं सर्वं वृत्तं दैवाद्विज्ञाय तत्पिता भूतार्थं सुहृदे निवेदयितुं

शकटं भाटकेन ग्रहीतुमपारयन् दूरं तद्भवनं पादचारेण प्रस्थितः पथि च श्रमवशादुपजातरोगः कान्यप्यहानि विलम्ब्य चिकित्सितैः किञ्चिदिव शान्ते रोगे धनिकमुपगम्य स्वपुत्रचापलं निवेदयामास. किन्तु 'त्वदर्थे कल्पितोंऽशः प्रागेवान्यस्मै दत्त' इति धनिकेन कथितो गत्यन्तराभावात् कामपि हीनामेव वृत्तिं स अश्रितवान्. पश्यत पुत्रस्य दम्भदोषेण पितुः कीदृगयमनर्थ आपतितः.

## ४४. तस्करसत्यशीलौ.

शङ्कर इति शम्बर इति च द्वौ बालावास्ताम्. तत्र शङ्करोऽनात्मीयं वस्तु कदाचिदपि नैव हरेत्; अतः स सत्यशीलः संवृत्तः. अपरः पुनरसकृदस्वीयमर्थं हरेत्; अतः स चौरो जातः. शङ्करः किलातिबाल्ये चापलात् परकीयस्य पदार्थस्य ग्रहणे प्रवर्तमान एव मातापितृभ्यां दण्डयित्वा प्रतिषिद्धः 'सत्यशीलो वर्तस्व' इति वारंवारमुपदिष्टश्च. शम्बरस्तु

परस्वं गृह्णन्नपि पितृभ्यां न निवारितः; तस्मादेष स्तेनाग्रणीः समपद्यत.

कचिद् दिने प्रातः शङ्करः पाठालयं गच्छन् पथि पृथुं मञ्जूषां पृष्ठे वहन्तं कमपि नयता केनापि पथिकेन समागच्छत्. पथिको मार्गपार्श्ववर्तिनः पान्थविश्रमगृहस्य द्वारि स्थितस्तत्रागतं तन्तूस्वामिनमुक्तवान्—'आर्य! प्रसीदतु भवान् मां तावच्चिन्तयितुम्, यावदहमत्रायतने पाथेयमभ्यवहृत्यागच्छामि. देहि कमपि मे सहायम्, योऽनवरोपितभारमश्वमिमं वल्गायां गृह्णन् मत्प्रत्यागमनावधि घासदानेनानुग्रहीष्यति' इति. भूस्वामी च समीपे परिजनासन्निधानादन्तिके गच्छन्तं शङ्करमाहूयाश्वावलम्बनाय प्रार्थितवान्. पान्थः 'अपि भवान् प्रतिभूर्भवेदस्य बालस्य सत्यशीलतायाम्? मदीयेषु किमयं मञ्जूषान्तर्गतेषु नारङ्गफलेषु चापलं नाचरेत्? प्रकृत्या चपलाः खलु बालकाः' इति तमन्वयुङ्क्त. क्षेत्रस्वामिना 'जानामि शैशवात् प्रभृत्येनम्. नखल्वसत्यं

चौर्यं वास्य क्वचिदपि कर्मणि दृष्टपूर्वम्. अपिचैन-मादेक्ष्यामि त्वदीयानि फलानि त्वन्निर्विशेषं पालयि-तुम्' इति भणिते, जातप्रत्ययः पान्थः 'तात! यद्य-प्रमत्तः फलानि रक्षेः, तर्हि श्रेष्ठं फलमेकं ते पारितो-षिकं दद्याम्' इति वदन् 'तथा' इत्युक्तवतो बालस्य हस्तेऽश्ववल्गामर्पयित्वा भोक्तुं गतः. क्षेत्रस्वामी च यथागतं चलितः.

ततोऽश्वं फलानि च रक्षतः शङ्करस्य पञ्चषेषु निमेषेष्वतीतेषु शम्बरः पाठालयं गच्छन्नग्रे सन्निधाय 'सखे! शङ्कर! किमर्थमिह तिष्ठसि? कस्यायमश्वः? आसु किन्तावन्निवेशितं मञ्जूषासु'? इति पप्रच्छ. श-ङ्कर उवाच—'अस्मिन् पथिकविश्रमालये सम्प्रति भोक्तुं गतस्य कस्यापि पान्थस्यायमश्वः. नारङ्गफला-न्यासु मञ्जूषासु वर्तन्ते. तदागमनं यावत्तद्रक्षणाय तेनाहमर्थितस्तथा करोमि. अपिच स प्रत्यागत्य फल-मेकं मे पारितोषिकं दास्यति' इति. शम्बरः 'किमेकं नारङ्गफलं स दास्यति? ननु सर्वाणि त्वद्वशे वर्तन्ते?

ममैकस्मिन् फले लिप्सास्ति. पश्यानि तावत् प्रथमं तेषां कियत् पीनत्वम्' इति वदन्नेव मञ्जूषां प्रति प्रसारितकरस्तदावरणमपसारयामास; दृष्ट्वा च तानि 'अहो मनोहरणि फलानि; जानानि परिपाकमेषां स्पर्शेन' इत्युक्तवान्.

शङ्करः 'मा तावत् शम्बर! फलानि स्प्राक्षीः, यद्यात्मनो हितमिच्छसि. किं ते कार्यमेतैः पक्वैरपि वा? यानि परकीयतयोपयोक्तुं न शक्यन्त' इत्यब्रवीत्.

शम्बरः 'सत्यमेव किं भणासि? "मा स्पृश" इति. न हि स्पर्शे दोषोऽस्ति. मा खलु मन्यस्व, तान्यपहर्तुमिच्छामीति' एवं कथयन् मञ्जूषान्तः करं प्रवेशयामास; गृहीत्वा च फलमेकं कराभ्यां सम्यक् परामृश्य पुनःपुनराघ्रायावदत्—'सौरभात् फलमिदमवधारयामि मधुरं परिपक्वं च. इच्छामि चैतदास्वादयितुम्; केवलं बिन्दुमेकं फलाग्रभाजो रसस्य सद्यः पिबेयम्' इति जल्पन्नेव फलमास्ये निदधौ.

बालैर्नाम सत्यशीलतामभिलषद्भिरुपस्थितेषु प्रलोभनहेतुषु सावधानैर्भाव्यम्. अल्पाल्पेनापि विषयेण जन आकृष्यमाण उत्तरोत्तरमकार्ये प्रवर्तते. पश्यत बालाः! शम्बरस्य किल फलानां दर्शनेन स्पर्शे, स्पर्शेनाघ्राणे, आघ्राणेनास्वादने च लोभो जातः.

ततः प्रतिश्रुतपालने श्रद्धालुना शङ्करेण 'फलं मा दूषय' इति सामवचनैरनुनाथितोऽपि स फलं न त्यक्तवान्; प्रत्युत 'अन्यदीये फले तव नाधिकारोऽस्ति; त्वदपेक्षया बलवन्तं मां निग्रहीतुं च न शक्नोषि; तत् तूष्णीं तिष्ठ' इत्युक्तवान्. तदा कुपितः शङ्करस्तस्य हस्तात् फलं बलाद् ग्रहीतुमयतिष्ट. क्षणेन च तयोः कलहव्यतिकरे प्रवृत्ते क्षुभितोऽश्वः फलमञ्जूषाकर्षणव्यग्रं तं दस्युं पश्चादङ्घ्रिणा तीव्रमताडयत्. तद्वशाच्च स व्यथितः साक्रन्दं भूमौ पपात. फलं च तदा तस्य हस्ताच्छङ्करो जग्राह. ततस्तदाक्रन्दं श्रुत्वा ततइतो जनास्तत्र यावदागच्छन्, तावच्चौरः शान्तव्यथ उत्थाय प्रकृतिस्थ इव तूष्णीं

स्थितः. तथापि शङ्करो यथावृत्तं जनेभ्यः प्रत्यागताया श्वस्वामिने च वर्णयामास. 'ज्ञातपूर्वे तस्मिन् दस्यौ सर्वमेतत् सम्भाव्यत' इति सम्भूय वदत्सु, प्रशंसत्सु चापरस्य सत्यशीलतां जनेषु फलस्वामी भृशं परितुष्टः 'तात! सर्वाण्येतानि फलानि ते पारितोषिकतया ददामि; प्रतिगृहाण' इति शङ्करमुक्तवान्. 'प्राक् प्रतिश्रुतं फलमेकमेव गृह्णीयाम्, न तु ततोऽधिकम्' इति वदन्तं तं भूयोभूयः सर्वफलग्रहणाय स प्रार्थयामास. ततस्तानि फलानि स्वीकुर्वन् सत्यशीलस्तत्कालोपस्थितेभ्यः पाठालयगामिभ्यो बालेभ्यः संविभज्य स्वयमेकमेव तदुपयुक्तवान्. चौरस्तु विलक्षः सर्वैः सहस्ततालमुपहस्यमानः स्थितः. ततः प्रशस्तगुणदर्शनेन भृशं विस्मिताः प्रीताश्च सर्वे जना अश्वस्वामी च शङ्करं विविधाभिराशीर्भिरभिननन्दुः.

स च तान् यथान्यायं प्रणम्यापूर्वफलास्वादेन द्विगुणितप्रणयैर्बालैः सबहुमानमनुगम्यमानः पाठालयं ययौ.

अये बालाः! अस्याः कथायास्तात्पर्यं सम्यगालोच्य सदाचारपरिचयं सर्वदा कुरुध्वम्.

विश्वेश्वरे कुरुत भक्तिमपेतदम्भां
पित्रोर्मतान्यनुविधत्त निरस्तशङ्कम्।
विद्यावतामपिच पालयतोपदेशान्
विद्यां श्रियं च यदि वाञ्छथ हे! कुमाराः! ॥

समाप्तेयं तृतीया पाठावली.

शुभं भूयात्.



# NOTES.



p. l.

1 7 आत्मा—soul or mind. कायः—body or trunk.

„ 8 अष्टवितस्तिमात्रः = अष्ट वितस्तयः प्रमाणमस्य. वितस्तिः—span (a measure) = 12 angulahs.

„ 15 प्रवणाकारम्—curved.

2 3 मस्तिष्कम्—brain.

„ 7 अमुत्रफलम्—enjoyment in the next world.

„ 11 शय्योत्थायम् (अव्ययं)—hastening from the bed.

3 12 दैनन्दिनम्—daily.

„ 14 व्यायामः—exercise.

4 4 दुनोति—*v.* hurts.

„ 8 निस्तलाकृतिः—oval.

„ 11 मरुः—desert.

„ 13 प्रस्रवणम्—spring. हिमघनः—flakes of snow.

„ 14 नगनिम्नगाः—torrents.

5 5 लशुनम्—garlic.

„ 7 उपरिकपालम्—upper shell. कोशः—unit distance = 2 or 2¼ miles (¼ of a yojana).

„ 13 पाथेयम्—provisions for a trip.

6 2 भान्त्सीः बन्ध् – to tie, लुङ्. माङ्योगादडभावः.

„ 3 निर्बन्धः – obstinacy, stubbornness, persistence.

„ 7 प्रमीतम् – died.

„ 8 प्राड्विवाकः – judge.

„ 14 कुहकः – cheat, rogue.

| p. | l. | |
|---|---|---|
| 8 | 5 | व्यब्रूताम् – विरुद्धमवदताम्. वि + ब्रू लङ्. |
| 9 | 11 | संविभागः – distribution. |
| 10 | 10 | प्रयाणकम् – march. |
| ,, | 11 | लुण्टितुम् – to steal. |
| 11 | 1 | संवासः – acquaintance. |
| 14 | 4 | निर्भर्त्स्य – to threaten, abuse or reproach. |
| 15 | 10 | उत्पुच्छयमानः – raising the tail. [do. |
| 16 | 5 | इतिकर्तव्यतामूढः – wholly at a loss as to what to |
| ,, | 17 | प्रत्यापत्तिः – to make up for. |
| 17 | 1 | पर्पः – a wooden leg for the lame, a vehicle used by the lame. नलिकम् – (cartridge) gun. |
| ,, | 7 | प्रसृत्वरम् – pervading, (spreading). |
| ,, | 12 | भवितव्यता – fate. |
| ,, | 13 | पूलः – a bundle. ग्रन्थिः – a knot. |
| 19 | 12 | शिशिलिद्वीपः – Sicily. एतनाभिधानः—named Etna |
| 21 | 2 | अम्लम् – sour. |
| ,, | 8 | सगर्धम् – greedily. |
| ,, | 14 | व्यात्तम् – wide opened. |
| 22 | 13 | संविद् – agreement, resolution. |
| ,, | 14 | यातना – acute pain. |
| 23 | 4 | आराद् – (अव्ययम्) distance. |
| ,, | 17 | षोडशशः – at sixteen. |
| 24 | 1 | राजदन्तौ = दन्तानां राजानौ. |
| ,, | 3 | पार्यन्तिकाः – endmost. |
| ,, | 4 | जीर्णिः – digestion. |
| ,, | 13 | श्रुतपूर्वी – one who has heard before. |
| ,, | 16 | अजिरम् – a court-yard. [traders. |
| 25 | 3 | सांयात्रिकाः – merchants trading by sea. (sea- |
| ,, | 4 | यथाजातः – fool. |

| p. | l. | |
|---|---|---|
| 25 | 9 | पटलम् - roof. |
| ,, | 12 | औपवेशिकः – neighbour. |
| ,, | 13 | परिवर्तयन् – one who is transposing. उद्घोलयन् – one who is stirring up. |
| 26 | 7 | प्ररोपितौषधि = प्ररोपिता ओषधयो यस्मिंस्तत्. |
| ,, | 9 | नियतजलोपक्लृप्तिकम् = नियता जलस्योपक्लृप्तिर्यस्य तत्. |
| ,, | 12 | शूकधान्यम् – any awned grain. |
| ,, | 13 | शमीधान्यम् – any pulse or grain growing in pods. |
| ,, | 14 | नीली – an indigo plant. |
| 27 | 3 | दोहदम् – *n.* manure. |
| ,, | 5 | आवपनम् – a vessel. |
| ,, | 9 | दीपवर्तिः – candle. |
| ,, | 11 | ऊयते – *v.* being woven. |
| ,, | 12 | दर्वी – spoon. |
| 28 | 1 | सिकतिलम् – sandy. |
| 29 | 6 | संसृष्टदेशः – United States. |
| ,, | 8 | वासिन्तनः – George Washington. |
| ,, | 11 | गर्वायमाणः – haughty. |
| 31 | 2 | शुक्तम् – sour. |
| ,, | 7 | उत्सः – spring, fountain. |
| ,, | 10 | अद्धा – undoubtedly. |
| ,, | 11 | प्रवाळकीटः – coral, zoophyte. |
| 33 | 1 | कुक्कुरः – dog. |
| ,, | 3 | कौलेयकः – dog. जाबालः – shepherd. [for ever. |
| ,, | 12 | अशकाव. शक् – to be able. लुङ्. गतगताः – gone |
| 34 | 1 | निर्विद्यमानः – disgusting. |
| ,, | 4 | अद्रिद्रोणी – valley. |

| p. | l. | |
|---|---|---|
| 34 | 12 | यत्सत्यम् — forsooth. |
| ,, | 13 | पल्ली – a small village. |
| 35 | 2 | छद्म – deceit. |
| ,, | 5 | जाहकः — cat. |
| ,, | 8 | राजपट्टः — velvet, (a fine silk cloth.) |
| ,, | 12 | दुग्धघनः — cheese. |
| ,, | 13 | उपानत् — shoe, sappath. |
| ,, | 15 | कङ्कतम् — comb. |
| 36 | 15 | एडकः — ram. छगलः — goat. |
| ,, | 16 | खिलम् — untrampled waste. |
| ,, | 16 | अपर्यस्तः — without being struck or upset. |
| 37 | 2 | तुभी — she-goat. |
| 38 | 2 | शलाटुः — unripe fruit. |
| ,, | 8 | कणिशम् — an ear or spike of corn. [ समासः.) |
| ,, | 14 | स्खलितप्रधावितं=स्खलितेन सहितं प्रधावितम्. (मध्यमपदलोपी |
| 39 | 4 | सक्तुः — flour. [made. |
| ,, | 5 | आणा — (kanji) rice gruel. राधयित्वा — having |
| ,, | 7 | कट्फलः — teak. खदिरः—name of a tree (karunkali.) |
| ,, | 11 | चिञ्चा — tamarind tree. |
| ,, | 12 | व्यञ्जनम् — sauce. ईतिः — scarcity, dearth. |
| ,, | 16 | शिफा — a fibrous root from the branch of a tree (like that of a banyan.) |
| 40 | 4 | लेपः — gum (gummy fluid from a banyan tree.) |
| ,, | 14 | पिचुः — cotton (without seeds). |
| 41 | 2 | वैधेयः — fool. |
| ,, | 11 | चपेटा — palm of the hand with fingers extended. |
| 42 | 12 | ग्लहः — stake, bet, wager. |
| 43 | 7 | निषादी — an elephant-driver. |

p. l.

43 14 उलूखलम् – mortar.

„ 15 शूर्पः – a winnowing basket.

„ „ मार्जनी – a broom.

44 1 विप्रलापः – mutual contradiction.

„ 14 सञ्चरमाणः – सम्पूर्वस्य चरतेः (समस्तृतीयायुक्तात् . १. ३. ५४.) इत्यात्मनेपदम् .

45 2 दशमी – very old.

„ 6 नृशंसम् – cruel.

„ 14 पुरोभागी – fault-finding.

47 5 समाहृतगुणस्यापि ... ... ... ... ... ... ...

Though the epithet समाहृतगुण is applicable as well to the stalk of the lotus and bow as to a man of virtue, he cannot be compared to them since he is neither सच्छिद्र like the one nor कुटिल like the other. समाहृतगुण when applied to (1) साधु, means "possessed of good qualities" (2) मृणाल means "filled with thread" (3) चाप, means "provided with a string. The stalk is सच्छिद्र in the sense that it has many pores in it while the man is not सच्छिद्र in as much as he has no छिद्र or weak points to be assailed at. The bow is कुटिल or bent unlike the man whose walk in life is never crooked or bent but straightforward.

47 7 ऐकगुण्यमनीहायां ... ... ... ... ... ... ...

When you do not undertake to do any piece of work, there is only one sequel to it; and that is, it will pay you nothing. But while you do anything, one or the other of the two will be the consequence; either the work will bring you its reward or fail to do so.

| p. | l. | |
|---|---|---|
| 47 | 2 | अभावः कर्मणां फलं – The reading. |
| | | 'न भवेत्कर्मणां फलं' – gives us a better construction. |
| ,, | 12 | सङ्क्रमकाष्ठम् – a small wooden bridge. |
| 48 | 1 | गोरसः – milk, ghee, etc. of a cow. |
| ,, | 2 | ,, – products of the earth. |
| ,, | 3 | ,, affectionate look. |
| ,, | 4 | ,, the relish of a sentence. |
| ,, | 9 | आक्रियते आ + कृ – to shape or form. |
| ,, | 10 | सर्वान्तरम् – inmost. |
| 49 | 1 | उपसमाधातुं — to collect. |
| ,, | 2 | निस्संशोषं – संशोषाभावाय (अव्ययीभावः) |
| ,, | 11 | निमित्तम् – an omen. |
| 52 | 8 | कालना — graze. |
| ,, | 11 | सहकृत्वरी –- co-operator. |
| ,, | 15 | कृतकपुत्री –adopted daughter. |
| 53 | 3 | याचितकम् –(anything) borrowed for use. |
| 54 | 1 | व्यारुरोज. वि + आ + रुज् – to break. लिट्. |
| ,, | 11 | सीवनम् – stitching. |
| 55 | 7 | कोष्ठम् – a room. |
| ,, | 11 | कञ्चुककोशः – a pocket. |
| 56 | 2 | रूप्यप्रतिनिधिपत्राणि -- bank notes. |
| ,, | 4 | कञ्चुकपेशी – a pocket. |
| 59 | 3 | अन्धुः – a well. |
| 60 | 1 | अस्वर्ग्यम् – unheavenly. |
| ,, | 2 | मार्किस-वेल्लसलिः – Marquis of Wellesley. |
| ,, | 16 | एकशः – one by one. |
| 62 | 6 | पृषदंशकः – cat. |
| 63 | 1 | उन्दुरुः – a mouse. |

| p. | l. | |
|---|---|---|
| 63 | 4 | विप्रलम्भः -- deceit. |
| ,, | 8 | लालसा -- longing. |
| 64 | 14 | त्वरिततरव्यापारिता = त्वरिततरं व्यापारितुं शीलमस्येति तथा. तस्य भावस्तत्ता. |
| 66 | 8 | ऊर्जस्वलम् -- strong. |
| 67 | 5 | ऋणापाकरणव्यतिकरः -- clearing one's debt. |
| 68 | 7 | दम्भः -- vanity. |
| 69 | 2 | स्तेनः -- thief. |
| ,, | 10 | वल्गा -- a bridle. |
| 70 | 4 | पारितोषिकम् -- a reward. |
| 72 | 13 | फलमञ्जूषाकर्षणव्यग्रः = फलपूर्णाया मञ्जूषाया आकर्षणे व्यग्रः. |
| 73 | 11 | विलक्षः -- ashamed. |

